# तैत्तिरीयसंहिता

भट्टभास्करमिश्रविरचितभाष्यसहिता

सम्पादकौ
ए० महादेव शास्त्री
के० रङ्गाचार्यश्च

प्राक्कथनलेखक:
प्रो० आर० एन० दाण्डेकर:

दशमो भागः
[ काण्डः ७; प्रश्नाः ४–५ ]

मोतीलाल बनारसीदास
दिल्ली वाराणसी पटना मद्रास

# THE

# TAITTIRĪYA SAMHITĀ

OF THE

## BLACK YAJURVEDA

With the Commentary of
BHAṬṬA BHĀSKARA MIŚRA

*Edited by*
A. MAHADEVA SASTRI
and
K. RANGACHARYA

*Foreword by*
Prof. R. N. DANDEKAR

VOL. X
[ Kāṇḍa VII : Praśnas 4-5 ]



MOTILAL BANARSIDASS
*Delhi Varanasi Patna Madras*

Published under the guidance of Sri Radheshyam Shastri.

*First Edition: Mysore, Government Oriental Library Series, 1898*
*Reprint: Delhi, 1986*

MOTILAL BANARSIDASS
Bungalow Road, Jawahar Nagar, Delhi 110 007

*Branches*
Chowk, Varanasi 221 001
Ashok Rajpath, Patna 800 004
120, Royapettah High Road, Mylapore, Madras 600 004



ISBN : 81-208-0229-2



PRINTED IN INDIA
BY JAINENDRA PRAKASH JAIN AT SHRI JAINENDRA PRESS, A-45 NARAINA INDUSTRIAL AREA, PHASE I, NEW DELHI 110 028 AND PUBLISHED BY NARENDRA PRAKASH JAIN FOR MOTILAL BANARSIDASS, DELHI 110 007

# EDITOR'S NOTE.

The manuscripts consulted in editing the portion of the work comprised in this volume are mentioned in the Editor's Prefatory Note in Volume XI.

None of the manuscripts referred to gives Bhaṭṭabhâskara's commentary on the anuvâka 9 of the fourth prapâṭhaka and on the anuvâkas 19—25 of the fifth prapâṭhaka of the seventh Kâṇḍa. We have therefore given Sâyaṇa-Mâdhava's commentary on these sections.

A. M. S.



# सप्तमकाण्डविषयसूचिका.

---

## चतुर्थः प्रपाठकः.



## पञ्चमः प्रपाठकः.



---

हरिः ॐ

# तैत्तिरीयसंहिता

## भट्टभास्करीयभाष्ययुक्ता.

### सप्तमकाण्डे चतुर्थप्रपाठकः.

हरिः ओम् ॥ बृहस्पतिरकामयत
श्रन्मे देवा दधीरन्गच्छेयं पुरोधा-
मिति स एतं चतुर्विंशतिरात्रमप-
श्यत्तमाऽहरत्तेनायजत ततो वै त-
स्मै श्रद्देवा अदधतागच्छत्पुरोधां य

[1]बृहस्पतिः । अकामयत । श्रत् । मे । देवाः । दधीरन् । गच्छेयम् । पुरोधामिति पुरः—धाम् । इति । सः । एतम् । चतुर्विंशतिरात्रमिति चतु-र्विंशति—रात्रम् । अपश्यत् । तम् । एति । अ-हरत् । तेन । अयजत । ततः । वै । तस्मै । श्र-

[1]अथ द्वौ चतुर्विंशतिरात्रौ । तत्रायं प्रथमः अतिरात्रो ज्योतिरादिस्त्र्यहः च त्रिरात्रः । उक्तं च—त्रिरात्रः द्वादशाहस्य दशाहानि पृष्ठ्यच्छन्दोमात्मकानि अतिरात्र इति । अयमधुना विधीयते—बृहस्पतिरित्यादि ॥ बृहस्पतिशब्दे सुदूस्वरावुक्तौ ।

एवं विद्वाꣳसंश्चतुर्विꣳशतिरात्रमा-
सते श्रदेभ्यो मनुष्या दधते गच्छ-
न्ति पुरोधां ज्योतिर्गौरायुरिति त्र्य-
हा भवन्तीयं वाव ज्योतिरन्तरिक्षं
गौरसावायुः ॥ १ ॥ इमानेव लो-

त् । देवाः । अदधत । अगच्छत् । पुरोधामिति पुरः-धाम् । ये । एवम् । विद्वाꣳसः । चतुर्विꣳशतिरात्रमिति चतुर्विꣳशति-रात्रम् । आसते । श्रत् । एभ्यः । मनुष्याः । दधते । गच्छन्ति । पुरोधामिति पुरः-धाम् । [2]ज्योतिः । गौः । आयुः । इति । त्र्यहा इति त्रि-अहाः । भवन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः ॥ १ ॥ इमान् । एव । लोकान् । अभ्या-

देवा मे मम श्रद्दधीरन् श्रद्धां कुर्वन्तु सत्योयमिति । गच्छेयं च पुरोधां प्राधान्यं पौरोहित्यं वा । पुरश्शब्दस्य उपसर्गवद्भावात् ‘आतश्चोपसर्गे’ इत्यङ् । भिदादिर्वा द्रष्टव्यः । स एतमित्यादि । गतम् ॥

[2]त्र्यहा इत्यादि ॥ चत्वारः, तथा सङ्ख्यापूरणात् । इयं वावेत्यादि । व्याख्यानम्* ॥

*सं. ७-३-७,

कानभ्यारोहन्त्यभिपूर्वं त्र्यहा भव-
न्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारो-
हन्त्यसत्रं वा एतद्यदछन्दोमं यच्छ-
न्दोमा भवन्ति तेन सत्रं देवता ए-
व पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो
वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओ-
जस्येव वीर्ये पशुषु प्रति तिष्ठन्ति

रोहन्तीत्यभि–आरोहन्ति । अभिपूर्वमित्यभि–पूर्वम् । त्र्यहा इति त्रि–अहाः । भवन्ति । अभिपूर्वमित्यभि–पूर्वम् । एव । सुवर्गमिति सुवः–गम् । लोकम् । अभ्यारोहन्तीत्यभि–आरोहन्ति । [3]असत्रम् । वै । एतत् । यत् । अछन्दोममित्यछन्दः–मम् । यत् । छन्दोमा इति छन्दः–माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरिति छन्दः–मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमा इति छन्दः–माः । ओजसि । एव ।

---

[3]असत्रं वा इत्यादि ॥ द्वादशाहीयस्य द्वादशरात्रस्य विधिः । पृष्ठ्यषडहश्छन्दोमा इत्यादि । ते च गताः* ॥

*सं. ७-३-८.

बृहद्रथन्तराभ्यां यन्तीयं वाव रथ-
न्तरमसौ बृहदाभ्यामेव ॥ २ ॥ य-
न्त्यथो अनयोरेव प्रति तिष्ठन्त्येते
वै यज्ञस्याञ्जसाऽयनी स्रुती ताभ्यां-
मेव सुवर्गं लोकं यन्ति चतुर्विꣳ-
शतिरात्रो भवति चतुर्विꣳशति-
रर्धमासास्संवथ्सरस्संवथ्सरस्सुवर्गो

वीर्यैं। पशुषु। प्रतीति। तिष्ठन्ति। [4]बृहद्रथन्तराभ्या-
मिति बृहत्-रथन्तराभ्याम्। यन्ति। इयम्। वा-
व। रथन्तरमिति रथं-तरम्। असौ। बृहत्।
आभ्याम्। एव ॥ २ ॥ यन्ति। अथो इति। अ-
नयोः। एव। प्रतीति। तिष्ठन्ति। एते इति।
वै। यज्ञस्य। अञ्जसाऽयनी इत्यंजसा-अयनी।
स्रुती इति। ताभ्याम्। एव। सुवर्गमिति सुवः-
गम्। लोकम्। यन्ति। [5]चतुर्विꣳशतिरात्र इति
चतुर्विꣳशति-रात्रः। भवति। चतुर्विꣳशतिरिति
चतुः-विꣳशतिः। अर्धमासा इत्यर्ध-मासाः।

[4]बृहद्रथन्तराभ्यामित्यादि ॥ गतम्* ॥

[5]चतुर्विंशतिरात्र इत्यादि ॥ चतुर्विंशतिसङ्ख्यान्वयात् चतुर्विं-
शत्यर्धमासात्मके संवत्सरे स्वर्गस्थानीये प्रतितिष्ठन्ति । अपिच

*सं. ७-२-१.

लोकस्संवथ्सर एव सुवर्गे लोके प्रति
तिष्ठन्त्यथो चतुर्विꣳशत्यक्षरा गायत्री
गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्म-
वर्चसमवं रुन्धतेऽतिरात्रावभितो भ-
वतो ब्रह्मवर्चसस्य परिगृहीत्यै ॥३॥

संवत्सर इति सं—वत्सरः । संवत्सर इति सं—व-त्सरः । सुवर्ग इति सुवः—गः । लोकः । संवत्सर इति सं—वत्सरे । एव । सुवर्ग इति सुवः—गे । लोके । प्रतीति । तिष्ठन्ति । अथो इति । चतुर्विꣳशत्यक्षरेति चतुर्विꣳशति—अक्षरा । गायत्री । गायत्री । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । गाय-त्रिया । एव । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अ-वेति । रुन्धते । अतिरात्रावित्यति—रात्रौ । अभि-तः । भवतः । ब्रह्मवर्चसस्येति ब्रह्म—वर्चसस्य । परिगृहीत्या इति परि—गृहीत्यै ॥ ३ ॥

अन्तरिक्षं गौरसावायुराभ्यामेव पञ्च-
चत्वारिꣳशच्च ॥ १ ॥

---

चतुर्विंशत्यक्षरा गायत्री, तल्लाभेन गायत्र्यात्मकब्रह्मवर्चसलाभः । अतिरात्राभ्यां चाभितो ब्रह्मवर्चसस्य परिग्रहः ॥

इति सप्तमे चतुर्थे प्रथमोनुवाकः.

यथा वै मनुष्या एवं देवा अग्रं आ-
सन्तेऽकामयन्तावर्तिं पाप्मानं मृ-
त्युमपहत्य दैवीꣳ सꣳसदं गच्छेमे-
ति त एतं चतुर्विꣳशतिरात्रमप-
श्यन्तमाऽहरन्तेनायजन्त ततो वै
तेऽवर्तिं पाप्मानं मृत्युमपहत्य दै-
वीꣳ सꣳसदमगच्छन् य एवं वि-

[1]यथा । वै । मनुष्याः । एवम् । देवाः । अग्रे । आसन् । ते । अकामयन्त । अवर्तिम् । पाप्मानम् । मृत्युम् । अपहत्येत्यप-हत्य । दैवीम् । सꣳसदमिति सं-सदम् । गच्छेम । इति । ते । एतम् । चतुर्विꣳशतिरात्रमिति चतुर्विꣳशति-रात्रम् । अपश्यन् । तम् । एति । अहरन् । तेन । अयजन्त । ततः । वै । ते । अवर्तिम् । पाप्मानम् । मृत्युम् । अपहत्येत्यप-हत्य । दैवीम् । सꣳसदमिति सं-सदम् । अगच्छन् । ये । एवम् । विद्वाꣳसः ।

---

[1]अथ संसदाख्यो द्वितीयश्चतुर्विंशतिरात्रो विधीयते—यथा वा इत्यादि ॥ यथा मनुष्या जरामृत्युदारिद्र्यपापयुक्ताः एवंधर्माणः पूर्वमेव देवा अप्यासन् । ते देवा अकामयन्त अवर्तिं दारिद्र्यं पाप्मानं मृत्युं चापहत्य दैवीं देवसम्बन्धिनीं संदसं

द्वाꣳसंश्चतुर्विꣳशतिरात्रमासतेऽवर्तिमेव पाप्मानमपहत्य श्रियं गच्छन्ति श्रीर् हि मनुष्यस्य ॥ ४ ॥ दैवीꣳ सꣳसज्ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै पृष्ठ्यःषडहो भवति षड्वा ऋतवस्संवत्सरस्तं मासा अर्धमासा ऋतवः

चतुर्विꣳशतिरात्रमिति चतुर्विꣳशति–रात्रम् । आसते । अवर्तिम् । एव । पाप्मानम् । अपहत्येत्यप–हत्य । श्रियम् । गच्छन्ति । श्रीः । हि । मनुष्यस्य ॥ ४ ॥ दैवीं । सꣳसदिति सं–सत् । [2]ज्योतिः । अतिरात्र इत्यति–रात्रः । भवति । सुवर्गस्येति सुवः–गस्य । लोकस्य । अनुख्यात्या इत्यनु–ख्यात्यै । पृष्ठ्यः । षडह इति षट्–अहः । भवति । षट् । वै । ऋतवः । संवत्सर इति सं–व-

संसीदन्ति देवा यत्र तत्स्थानं गच्छेमेति । 'देवाद्यञञो' इत्यञ् । त एतामित्यादि । गतम् । श्रीर्हि दैवसंसत् दैवसंसदा सदृशत्वात् ॥

[2]ज्योतिरतिरात्र इत्यादि ॥ अत्रेयमहःक्लृप्तिः—अतिरात्रश्चतुर्विंशः उक्थ्य आरम्भणीयः त्रिवृद्वा पृष्ठ्यस्तोमः षडहः त्रयस्त्रिंशमहरनिरुक्तं त्रयस्त्रिंशं निरुक्तं त्रिणवं द्वे एकविंशे त्रिणवं

प्रविश्य दैवीꣳ सꣳसदमगच्छन् य
एवं विद्वाꣳसंश्चतुर्विꣳशतिरात्रमा-
संते संवथ्सरमेव प्रविश्य वस्यंसीꣳ

त्सरः । तम् । मासाः । अर्धमासा इत्यर्ध–मा-
साः । ऋतवः । प्रविश्येति प्र–विश्य । दैवीम् ।
सꣳसदमिति सं–सदम् । अगच्छन्न् । ये । एवम् ।
विद्वाꣳसः । चतुर्विꣳशतिरात्रमिति चतुर्विꣳशति–
रात्रम् । आसंते । संवत्सरमिति सं–वत्सरम् । एव ।
प्रविश्येति प्र–विश्य । वस्यंसीम् । सꣳसदमिति
सं–सदम् । गच्छन्ति । [3]त्रयः । त्रयस्त्रिꣳशा इति

त्रयस्त्रिंशमहः निरुक्तं त्रयस्त्रिंशमानिरुक्तं पृष्ठ्यस्तोमष्षडहः प्रत्यङ् त्रिवृदहरनिरुक्तं ज्योतिष्टोमो वैश्वानरोति*रात्रः इति । इयमिह प्रतिपाद्यते । ज्योतिरतिरात्रः प्रथममहर्भवति स्वर्गस्यानुक्रमेण ख्यात्यै प्रकाशाय तद्भवति । पृष्ठ्य इत्यादि । षडहविधिः । षडृत्वात्मकसंवत्सरं प्रविश्य मासा अर्धमासा ऋतवश्च दैवीं संसदमगच्छन् तस्मादेवं विदित्वा चतुर्विंशतिरात्रमासीनाः संवत्सरमेव प्रविश्य वस्यसीं वरिष्ठां संसदं श्लाघ्यां श्रियं गच्छन्ति । वसुमच्छब्दादीयसुनि 'विन्मतोर्लुक्' इति मतुब्लोपे कृते प्रत्ययाद्यक्षरलोपश्छान्दसः ॥

[3]त्रयस्त्रयस्त्रिंशा अवस्तादिति ॥ मध्यमषडहारम्भे त्रयस्त्रिंशा भवन्ति ।

*नरो ज्योतिरति.

सꣳसदं गच्छन्ति त्रयस्त्रयस्त्रिꣳशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिꣳशाः पुरस्तात्त्रयस्त्रिꣳशैरेवोभयतोऽर्तिं पाप्मानमपहत्य दैवीꣳ सꣳसदं मध्यतः ॥५॥ गच्छन्ति पृष्ठानि हि दै-

त्रयः—त्रिꣳशाः । अवस्तात् । भवन्ति । त्रयः । त्रयस्त्रिꣳशा इति त्रयः—त्रिꣳशाः । पुरस्तात् । त्रयस्त्रिꣳशैरिति त्रयः—त्रिꣳशैः । एव । उभयतः । अर्तिम् । पाप्मानम् । अपहत्येत्यप—हत्य । दैवीम् । सꣳसदमिति सं—सदम् । मध्यतः ॥ ५ ॥

---

कथं? प्रथमस्य षडहस्य षष्ठमहः एकस्त्रयस्त्रिंशः, त्रिवृदादित्रयस्त्रिंशान्तत्वात् पृष्ठानाम् । ततष्षडहयोर्मध्ये निरुक्तो द्वितीयस्त्रयस्त्रिंशः । ततो द्वितीयस्य षडहस्य आद्यस्त्रयस्त्रिंशः तृतीयः । त्रयस्त्रिंशत्रिणवैकविंशानां षडहावराध्यानां क्रमात् व्युत्क्रमजन्यत्वात् मध्यमषडहस्यैव त्रयस्त्रिंशाः परस्तान्मध्यमषडहावसानेऽपि भवन्ति । कथं? उक्तेन न्यायेन मध्यमस्य षडहस्य षष्ठमहरेकस्त्रयस्त्रिंशः; ततष्षडहयोर्मध्ये अनिरुक्तो द्वितीयस्त्रयस्त्रिंशः; तत उत्तरस्य षडहस्य प्रतीचीनस्य आद्यमहस्तृतीयः त्रयस्त्रिंश इति । एवमवस्तात् परस्ताच्च त्रयस्त्रिंशैरेव स्थितैः तद्दिव्यसङ्ख्यानैः अर्तिं च पाप्मानं चापहत्य दैवीं संसदं मध्यतोवस्थितां गच्छन्ति । का पुनस्सेत्याह—पृष्ठानि हीत्यादि ॥

वीं स॑ꣳसज्जामि वा एतत्कुर्वन्ति यत्त्रयंस्त्रयस्त्रि॑ꣳशा अन्वञ्चो मध्ये॑ऽनिरुक्तो भवति तेनाजा॑म्यूर्ध्वानि पृष्ठानि भवन्त्यूर्ध्वाश्छंन्दोमा उभाभ्याꣳ रूपाभ्यꣳ सुवर्गं लोकं यगच्छन्ति । पृष्ठानि । हि । दैवीं । स॑ꣳसदिति॑ सं–सत् । [4]जामि । वै । एतत् । कुर्वन्ति । यत् । त्रयंः । त्रयस्त्रि॑ꣳशा इति॑ त्रयः–त्रि॑ꣳशाः । अन्वञ्चंः । मध्यें । अनिरुक्त इत्यनिः–उक्तः । भवति । तेनं । अजामि । ऊर्ध्वानिं । पृष्ठानि । भवन्ति । [5]ऊर्ध्वाः । छन्दोमा इति॑ छन्दः–माः । उभाभ्याम् । रूपा-

[4]जामि वा इत्यादि ॥ आलस्यजननमिदं क्रियते । तस्मान्मध्ये त्रयाणां मध्य मस्त्रिंशोऽनिरुक्तो भवति अव्यक्तनामा भवति । तेनाजामि भवति । मध्यमष्षडहो निरुक्त इत्येके । ऊर्ध्वानि रथन्तरादिक्रमेण वर्तन्ते ॥

[5]ऊर्ध्वाश्छन्दोमा इति ॥ तान्येवाहानि चतुर्विंशतिक्रमेण वर्तन्ते । उभाभ्यां रूपाभ्यामिति । एतस्य षडहस्य पृष्ठ्यच्छन्दोमात्मके द्वे रूपे संपाद्ये इति दर्शितम् । तद्धर्मानुगमात् भाक्तो व्यपदेश इत्युक्तं भवति । यथोक्तं आचार्येण—'अथेदं संसदामयनं छन्दोमं भवति विज्ञायन्ते खल्वस्य छन्दोमभक्तयश्चतुर्विंशं चतुश्चत्वारिंशं अष्टाचत्वारिंशम्' इति । अत्रैवं जानीयात् आद्ये त्रिवृत

न्त्यसंत्रं वा एतद्यदंछन्दोमं यच्छंन्दो-
मा भवंन्ति तेनं सत्रं देवतां एव
पृष्ठैरवं रुन्धते पशूञ्छंन्दोमैरोजो वै
वीर्यं पृष्ठानिं पशवंः ॥ ६ ॥ छन्दो-
मा ओजंस्येव वीर्ये पशुषु प्रतिं ति-

ष्ठन्ति ॥ ५ ॥

भ्याम् । सुवर्गमितिं सुवः—गम् । लोकम् । यन्ति ।
[6]असंत्रम् । वै । एतत् । यत् । अछन्दोममित्यंछ-
न्दः—मम् । यत् । छन्दोमा इतिं छन्दः—माः ।
भवंन्ति । तेनं । सत्रम् । देवतांः । एव । पृष्ठैः ।
अवेतिं । रुन्धते । पशून् । छन्दोमैरितिं छन्दः—
मैः । ओजंः । वै । वीर्यम् । पृष्ठानिं । पशवंः ॥ ६ ॥
छन्दोमा इतिं छन्दः—माः । ओजंसि । एव । वी-

---

आयतने त्रयस्त्रिंशोऽग्निष्टोमश्चतुर्विंशाः पवमानाः, द्वितीये पञ्चदश-स्यायतने त्रिणवः अष्टाविंशाः पवमानाः, तृतीये सप्तदशस्यायतने एकविंशः द्वाविंशाः पवमानाः, चतुर्थेऽस्मिन् आयतने एकविंशः षट्त्रिंशाः पवमानाः, पञ्चमेऽस्मिन्नायतने त्रिणवश्चत्वारिंशाः पवमानाः, षष्ठे स्व आयतने त्रयस्त्रिंशः चतुश्चत्वारिंशाः पवमानाः, ततः त्रयस्त्रिंशः अष्टाचत्वारिंशाः पवमानाः इति ॥

[6]अथैवं संपाद्यत्वे हेतुमाह—असत्रमित्यादि ॥ गतम्* । पृष्ठैरिति । पृष्ठरूपेण ॥

---

*सं. ७-३-८.

ष्ठन्ति त्रयस्त्रयस्त्रिꣳशा अवस्ताद्भ-
वन्ति त्रयस्त्रयस्त्रिꣳशाः परस्ता-
न्मध्ये पृष्ठान्युरो वै त्रयस्त्रिꣳशा
आत्मा पृष्ठान्यात्मन एव तद्यज-
मानाश्शर्म नह्यन्तेऽनार्त्यै बृहद्रथ-
न्तराभ्यां यन्तीयं वाव रथन्तरमसौ
बृहदाभ्यामेव यन्त्यथो अनयोरेव
प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसाऽ-

यं । पशुषु । प्रतीति । तिष्ठन्ति । [7]त्रयः । त्रयस्त्रि-ꣳशा इति त्रयः—त्रिꣳशाः । अवस्तात् । भवन्ति । त्रयः । त्रयस्त्रिꣳशा इति त्रयः—त्रिꣳशाः । पर-स्तात् । मध्ये । पृष्ठानि । उरः । वै । त्रयस्त्रिꣳ-शा इति त्रयः—त्रिꣳशाः । आत्मा । पृष्ठानि । आ-त्मने । एव । तत् । यजमानाः । शर्म । नह्यन्ते । अनार्त्यै । बृहद्रथन्तराभ्यामिति बृहत्—रथन्तरा-भ्याम् । यन्ति । इयम् । वाव । रथन्तरमिति रथं—तरम् । असौ । बृहत् । आभ्याम् । एव । यन्ति । अथो इति । अनयोः । एव । प्रतीति । तिष्ठन्ति ।

[7]त्रयस्त्रयस्त्रिंशा इत्यादि* ॥

*सं. ७-३-५.

यंनी स्त्रुती ताभ्यांमेव ॥ ७ ॥ सु-
वर्गं लोकं यन्ति परांञ्चो वा एते
सुवर्गं लोकमभ्यारोंहन्ति ये पराचीं-
नांनि पृष्ठान्युंपयन्तिं प्रत्यङ्षडहो भं-
वति प्रत्यवंरूढ्या अथो प्रतिंष्ठित्या
उभयोंर्लोकयोर् ऋद्ध्वोत्तिंष्ठन्ति त्रि-
वृतोधिं त्रिवृतमुपं यन्ति स्तोमांनाꣳ

एते इतिं । वै । युज्ञस्यं । अञ्जसाऽयंनी इत्यंञ्जसा-अयंनी । स्त्रुती इतिं । ताभ्यांम् । एव ॥ ७ ॥ सुवर्गमितिं सुवः-गम् । लोकम् । यन्ति । परांञ्चः । वै । एते । सुवर्गमितिं सुवः-गम् । लोकम् । अभ्यारोंहन्तीत्यंभि-आरोंहन्ति । ये । पराचीनांनि । पृष्ठानिं । उपयन्तीत्युंप-यन्तिं । प्रत्यङ् । षडह इतिं षट्-अहः । भवति । प्रत्यवंरूढ्या इतिं प्रति-अवंरूढ्यै । अथो इतिं । प्रतिंष्ठित्या इति प्रतिं-स्थित्यै । उभयोंः । लोकयोंः । ऋद्ध्वा । उदितिं । तिष्ठन्ति । त्रिवृत इतिं त्रि-वृतंः । अधीतिं । त्रिवृतमितिं त्रि-वृतंम् । उपेतिं । यन्ति । स्तोमांनाम् । संपंत्त्या इति सं-पत्त्यै । [8]प्रभवायेतिं प्र-

[8]अयं मनुष्यलोकः खलु स क्षयः तदग्निष्टोमाख्यमायतनम् । तस्मा-

संपत्त्यै प्रभवाय ज्योतिरग्निष्टोमो भवत्ययं वाव स क्षयोस्मादेव तेन क्षयान्न यन्ति चतुर्विꣳशतिरात्रो भवति चतुर्विꣳशतिरर्धमासास्संवथ्सरस्संवत्सरस्सुवर्गो लोकस्संवथ्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतु-

भवाय । ज्योतिः । अग्निष्टोम इत्यग्नि-स्तोमः । भवति । अयम् । वाव । सः । क्षयः । अस्मात् । एव । तेन । क्षयात् । न । यन्ति । [9]चतुर्विꣳशति रात्र इति चतुर्विꣳशति-रात्रः । भवति । चतुर्विꣳशतिरिति चतुः-विꣳशतिः । अर्धमासा इत्यर्ध-मासाः । संवत्सर इति सं-वत्सरः । संवत्सर इति सं-वत्सरः । सुवर्ग इति सुवः-गः । लोकः । संवत्सर इति सं-वत्सरे । एव । सुवर्ग इति सुवः-

तेनाग्निष्टोमेन अस्मात् क्षयात् लोकान्न यन्ति न गच्छन्ति न नश्यन्तीत्यर्थः । 'क्षयो निवासे' इत्याद्युदात्तत्वम् ॥

[9]चतुर्विंशतिरात्र इत्यादि ॥ गतम्* । अतिरात्राभ्यामभितो ब्रह्मवर्चसस्य परिग्रहः ॥

इति सप्तमे चतुर्थे द्वितीयोनुवाकः ॥

*सं. ७-४-१.

विंशत्यक्षरा गायत्री गायत्री ब्रह्म-
वर्चसं गायत्रियैव ब्रह्मवर्चसमवं
रुन्धतेऽतिरात्रावभितो भवतो ब्रह्म-
वर्चसस्य परिगृहीत्यै ॥ ८ ॥

ऋक्षा वा इयमलोमकाऽऽसीथ्साऽ-
कामयतौषधीभिर्वनस्पतिभिः प्रजा-

गे । लोके । प्रतीति । तिष्ठन्ति । अथो इति । चतुर्विंशत्यक्षरेति चतुर्विंशति–अक्षरा । गायत्री। गायत्री । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । गायत्रिया । एव । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । अवेति । रुन्धते । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येति ब्रह्म–वर्चसस्य । परिगृहीत्या इति परि–गृहीत्यै ॥ ८ ॥

मनुष्यस्य मध्यतः पशवस्ताभ्यामेव
संवत्सरश्चतुर्विंशतिश्च ॥२॥

[1]ऋक्षा । वै । इयम् । अलोमका । आसीत् । सा । अकामयत । ओषधीभिरित्योषधि–भिः ।

---

[1]अथ त्रिंशद्रात्र आरभ्यते—ऋक्षा वा इत्यादि ॥ तृणादिरहिता स्थली ऋक्षा, इयं पृथिवी पूर्वं अलोमका आसीत् वृक्षा-

येयेति सैतास्त्रिꣳशतꣳ रात्रीरप-
श्यत्ततो वा इयमोषधीभिर्वनस्पति-
भिः प्राजायत ये प्रजाकामाः प-
शुकामास्स्युस्त एता आसीरन्प्रैव
जायन्ते प्रजया पशुभिरियं वा
अक्षुध्यथ्सैतां विराजमपश्यत्तामा-

वनस्पतिभिरिति वनस्पति–भिः । प्रेति । जायेय । इति । सा । एताः । त्रिꣳशतम् । रात्रीः । अपश्यत् । ततः । वै । इयम् । ओषधीभिरित्योषधि–भिः । वनस्पतिभिरिति वनस्पति–भिः । प्रेति । अजायत । ये । प्रजाकामा इति प्रजा–कामाः । पशुकामा इति पशु–कामाः । स्युः । ते । एताः । आसीरन्न् । प्रेति । एव । जायन्ते । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । [2]इयम् । वै । अक्षुध्यत् । सा । एताम् । विराजमिति वि–

---

द्यभावात् । पावकादित्वादित्वाभावः । गतमन्यत् । आसीरन्निति । एतास्त्रिंशतं रात्रीरासीरन् ॥

[2]इयं वा इत्यादि ॥ इयं पृथिवी पूर्वमक्षुध्यत् क्षुत्पीडिताऽभवत् । सा त्रिंशद्रात्रेण एतां विराजमन्नं अपश्यत् । ततस्सा ता-

त्मन्धित्वाऽन्नाद्यमवारुन्धौषधीः॥ १ ॥
वनस्पतीन्प्रजां पशून्तेनावर्धत सा
जेमानं महिमानमगच्छद्य एवं वि-
द्वाꣳस एता आसते विराजमेवात्म-
न्धित्वाऽन्नाद्यमवं रुन्धते वर्धन्ते प्रज-
यां पशुभिर्जेमानं महिमानं गच्छ-

राजम् । अपश्यत् । ताम् । आत्मन्न् । धित्वा । अन्नाद्यमित्यंन्न-अद्यम् । अवेति । अरुन्ध । ओषधीः ॥ १ ॥ वनस्पतीन् । प्रजामिति प्र-जाम् । पशून् । तेन । अवर्धत । सा । जेमानम् । महिमानम् । अगच्छत् । ये । एवम् । विद्वाꣳसः । एताः । आसते । विराजमिति वि-राजम् । एव । आत्मन्न् । धित्वा । अन्नाद्यमित्यंन्न-अद्यम् । अवेति । रुन्धते । वर्धन्ते । प्रजयेति प्र-जया । पशुभिरिति पशु-भिः । जेमानम् । महिमानम् । ग-

---

मात्मनि स्थापयित्वा अन्नाद्यं अन्नादनसामर्थ्यं ओषध्यादींश्चावारुन्धत। ततस्तदवरोधेन अवर्धत पृथिवी । ततो जेमानं जयं महिमानं महत्त्वं चागच्छत् । जयतेर्महतेश्च औणादिको मनिन्प्रत्ययः । यद्वा—जेतृमहितृशब्दाभ्यां 'तुश्छन्दसि' इतीमनिचि, 'तुरिष्ठेमेयस्सु' इति टिलोपः । पूर्वत्र प्रत्ययादेर्लोपः । य एवमित्यादि । गतम् ॥

न्ति ज्योतिंरतिरात्रो भंवति सुवर्गस्यं लोकस्यानुंख्यात्यै पृष्ठ्यंष्षडुहो भंवति षड्वा ऋतवंष्षट्पृष्ठानिं पृष्ठैरेवर्तूनन्वारोंहन्त्यृतुभिंस्संवत्सरं ते संवथ्सर एव ॥ १० ॥ प्रतिं तिष्ठन्ति त्रयस्त्रिꣳशात्त्रयस्त्रिꣳशमुपं

च्छन्ति । [3]ज्योतिः । अतिरात्र इत्यंति—रात्रः । भवति । सुवर्गस्येतिं सुवः—गस्यं । लोकस्यं । अनुंख्यात्यै । इत्यनुं—ख्यात्यै । [4]पृष्ठ्यः । षडह इतिं षट्—अहः । भवति । षट् । वै । ऋतवंः । षट् । पृष्ठानिं । पृष्ठैः । एव । ऋतून् । अन्वारोंहन्तीत्यंनु—आरोंहन्ति । ऋतुभिरित्यृतु—भिः । संवत्सरमितिं सं—वत्सरम् । ते । संवत्सर इति सं—वत्सरे । एव ॥ १० ॥ प्रतीतिं । तिष्ठन्ति । [5]त्रयस्त्रिꣳशादितिं त्र-

[3]ज्योतिरतिरात्र इत्यादि ॥ व्याख्यातम्* । व्यक्ताऽहःकॢप्तिः ॥

[4]पृष्ठ्यष्षडह इत्यादि ॥ षट्त्वान्वयात् पृष्ठैः ऋतून् ऋतुभिश्च संवत्सरमारुह्य तत्र प्रतितिष्ठन्ति ॥

[5]त्रयस्त्रिंशादिति ॥ त्रयस्त्रिंशात्पृष्ठात् परं पुनरपि त्रयस्त्रिंशमुप-

*सं. ७-४-२.

यन्ति यज्ञस्य संतत्या अथो प्रजा-
पतिर्वै त्रयस्त्रिꣳशः प्रजापतिमेवा-
रभन्ते प्रतिष्ठित्यै त्रिणवो भवति
विजित्या एकविꣳशो भवति प्रति-

यः–त्रिꣳशात् । त्रयस्त्रिꣳशमिति त्रयः–त्रिꣳ-
शम् । उपेति । यन्ति । यज्ञस्य । संतत्या इति
सं–तत्यै । अथो इति । प्रजापतिरिति प्रजा–पतिः।
वै । त्रयस्त्रिꣳश इति त्रयः–त्रिꣳशः । प्रजापति-
मिति प्रजा–पतिम् । एव । एति । रभन्ते । प्रति-
ष्ठित्या इति प्रति–स्थित्यै । त्रिणव इति त्रि–नवः।
भवति । विजित्या इति वि–जित्यै । एकविꣳश
इत्येक–विꣳशः । भवति । प्रतिष्ठित्या इति प्रति–
स्थित्यै । अथो इति । रुचम् । एव । आत्मन् ।

यन्ति यज्ञस्य सन्तत्यै अविच्छेदाय । अथो अपि च प्रजापति-स्त्रयस्त्रिंशः सर्वदेवतामयत्वात् । एतासां च त्रयस्त्रिंशत्वात् तमेवा-रभन्ते । तत्प्रतिष्ठार्थं भवति । त्रिणवस्तदनन्तरं भवति । विज-यार्थं तद्भवति, तस्य तत्साधनत्वात् । तत एकविंशः भवति प्र-तिष्ठार्थं, तत्प्रतिष्ठायास्तत्र जातत्वात् । सर्वत्र 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । अथो अपि रुचं दीप्तिमात्मनि दधते, एकविंशस्यादित्यत्वात् । एवमेतानि दशाहानि ॥

ष्ठित्या अथो रुचमेवात्मन्दंधते त्रि-
वृदंग्निष्टुद्भंवति पाप्मानंमेव तेन नि-
र्दंहन्तेऽथो तेजो वै त्रिवृत्तेज एवा-
त्मन्दंधते पञ्चदश इंन्द्रस्तोमो भंव-
तीन्द्रियमेवावं ॥ ११ ॥ रुन्धते स-
प्तदशो भंवत्यन्नाद्यस्यावंरुद्ध्या अ-
थो प्रैव तेनं जायन्त एकविꣳशो

दधते । [6]त्रिवृदिति त्रि-वृत् । अग्निष्टुदित्यंग्नि-
स्तुत् । भवति । पाप्मानंम् । एव । तेनं । निरि-
तिं । दहन्ते । अथो इतिं । तेजंः । वै । त्रिवृदिति
त्रि-वृत् । तेजंः । एव । आत्मन्न् । दधते । पञ्च-
दश इतिं पञ्च-दशः । इन्द्रस्तोम इतीन्द्र-स्तोमः ।
भवति । इन्द्रियम् । एव । अवेतिं ॥ ११ ॥ रुन्ध-
ते । सप्तदश इतिं सप्त-दशः । भवति । अन्नाद्य-
स्येत्यंन्न-अद्यंस्य । अवंरुद्ध्या इत्यवं-रुद्ध्यै । अथो
इतिं । प्रेतिं । एव । तेनं । जायन्ते । एकविꣳश

---

[6]अथ त्रिवृदग्निष्टुत् सर्वाग्नेयः ॥ गतमन्यत् । ततः पञ्चदश इन्द्रस्तोमः यत्र इन्द्रः स्तूयते । ततस्सप्तदशः अन्नप्रभवत्वात् अन्नाद्याय भवति । अथो अपि च तेन प्रजायते सप्तदशस्य प्राजा-

भवति प्रतिष्ठित्या अथो रुचमेवा-
त्मन्दधते चतुर्विंशो भवति च-
तुर्विंशतिरर्धमासास्संवथ्सरस्संव-
थ्सरस्सुवर्गो लोकस्संवथ्सर एव
सुवर्गे लोके प्रति तिष्ठन्त्यथो एष

इत्येक–विंशः । भवति । प्रतिष्ठित्या इति प्रति–स्थित्यै । अथो इति । रुचम् । एव । आत्मन्न् । दधते । [7]चतुर्विंश इति चतुः–विंशः । भवति । चतुर्विंशतिरिति चतुः–विंशतिः । अर्धमासा इत्यर्ध–मासाः । संवत्सर इति सं–वत्सरः । संवत्सर इति सं–वत्सरः । सुवर्ग इति सुवः–गः । लोकः । संवत्सर इति सं–वत्सरे । एव । सुवर्ग इति सुवः–गे । लोके । प्रतीति । तिष्ठन्ति । अथो इति । एषः । वै । विषूवानिति विषु–वान् । विषूवन्त इति विषु–

पत्यत्वात् । अथ—एकविंशो भवतीत्यादि । गतम् । तस्य प्रतिष्ठाहेतुत्वमुक्तं रुचो हेतुत्वं च ॥

[7]अथ चतुर्विंशः ॥ चतुर्विंशतिरर्धमासा इत्यादि । गतम्* । अथो अपि च एष चतुर्विंशो विषूवान् विविधस्वरूपाणामह्नां मध्यस्थः पञ्चदशत्वादिविधैरहोभिः तद्वान् विषूवान् । 'ह्रस्वनुड्भ्याम्' इति

*सं. ७-४-१.

वै विषूवान् विषूवन्तो भवन्ति य एवं
विद्वाꣳसं एता आसंते चतुर्विꣳशात्पृ-
ष्ठान्युपं यन्ति संवत्सर एव प्रतिष्ठा-
यं ॥ १२ ॥ देवता अभ्यारोहन्ति त्र-
यस्त्रिꣳशात्त्रयस्त्रिꣳशमुपं यन्ति त्र-
यंस्त्रिꣳशद्वै देवता देवतास्वेव प्रति

वन्तः । भवन्ति । ये । एवम् । विद्वाꣳसंः । एताः ।
आसंते । [8]चतुर्विꣳशादिति चतुः–विꣳशात् । पृष्ठा-
नि । उपेति । यन्ति । संवत्सर इति सं–वत्सरे ।
एव । प्रतिष्ठायेति प्रति–स्थायं ॥ १२ ॥ देवताः ।
अभ्यारोहन्तीत्यभि–आरोहन्ति । त्रयस्त्रिꣳशादिति
त्रयः–त्रिꣳशात् । त्रयस्त्रिꣳशमिति त्रयः–त्रिꣳ-
शम् । उपेति । यन्ति । त्रयंस्त्रिꣳशदिति त्रयः–त्रि-
ꣳशत् । वै । देवताः । देवतासु । एव । प्रतीति ।

---

मतुप उदात्तत्वम् । एवं विदित्वा आसीना विषूवन्तः (विषुव-
तो) मध्यस्थाः सर्वैः सेव्याः भवन्ति ॥

[8]अथ चतुर्विंशानन्तरं पृष्ठान्युपयान्ति ॥ संवत्सर एवेत्यादि ।
चतुर्विंशतिरर्धमासा इत्यादि कृत्वा । अथ त्रयस्त्रिंशान्तात्पृष्ठात् त्रय-
स्त्रिंशमुपयन्ति । त्रयस्त्रिंशद्वा इत्यादि । गतम् ॥

तिष्ठन्ति त्रिणवो भंवन्तीमे वै लो-
कास्त्रिंणव एष्वेव लोकेषु प्रति ति-
ष्ठन्ति द्वावेकवि॒ꣳशौ भंवतः प्रतिष्ठि-
त्या अथो रुचमेवात्मन्दंधते बहवंष्षो-
डशिनो भवन्ति तस्माद्बहवंः प्रजासु
वृषाणो यदेते स्तोमा व्यतिषक्ता भ-

तिष्ठन्ति । [9]त्रिणव इति त्रि—नवः । भवति । इमे । वै । लोकाः । त्रिणव इति त्रि—नवः । एषु । एव । लोकेषु । प्रतीति । तिष्ठन्ति । द्वौ । एकविꣳशावित्येक—विꣳशौ । भवतः । प्रतिष्ठित्या इति प्रति—स्थित्यै । अथो इति । रुचम् । एव । आत्मन् । दधते । बहवंः । षोडशिनः । भवन्ति । तस्मात् । बहवंः । प्रजास्विति प्र—जासु । वृषाणः । [10]यत् । एते । स्तोमाः । व्यतिष-

---

[9]अथ त्रिणवः—इमे वा इत्यादि ॥ व्याख्यातम् । अथ द्वावेकविंशौ बहव इत्यादि । एवं षोडशिन एकविंशो बहवो भवन्ति । तस्मात्प्रजासु च बहवो वृषाणः सेक्तारः ॥

[10]यदेत इत्यादि ॥ व्यतिषक्ताः व्यत्यासेन परस्परानुषक्ताः । तस्मादियमित्यादि । गतम् ॥

वन्ति तस्मादियमोषधीभिर्वनस्पति-
भिर्व्यतिषक्ता ॥ १३ ॥ व्यतिषज्यन्ते
प्रजया पशुभिर्य एवं विद्वाꣳसं ए-
ता आसतेऽक्लृप्ता वा एते सुवर्गं लोकं
यन्त्युच्चावचान् हि स्तोमानुपयन्ति
यदेत ऊर्ध्वाः क्लृप्तास्स्तोमा भवन्ति
क्लृप्ता एव सुवर्गं लोकं यन्त्युभयोरे-

क्ता इति वि–अतिषक्ताः । भवन्ति । तस्मात् । इयम् । ओषधीभिरित्योषधि–भिः । वनस्पतिभिरिति वनस्पति–भिः । व्यतिषक्तेति वि–अतिषक्ता ॥ १३ ॥ व्यतिषज्यन्त इति वि–अतिषज्यन्ते । प्रजयेति प्र–जया । पशुभिरिति पशु–भिः । ये । एवम् । विद्वाꣳसः । एताः । आसते । [11]अक्लृप्ताः । वै । एते । सुवर्गमिति सुवः–गम् । लोकम् । यन्ति । उच्चावचान् । हि । स्तोमान् । उपयन्तीत्युप–यन्ति । यत् । एते । ऊर्ध्वाः । क्लृप्ताः । स्तो-

---

[11]अक्लृप्ता वा इत्यादि ॥ उच्चावचस्तोमानां अह्नां उपायनात् एते अक्लृप्ताः असंपन्ना एव सुवर्गं गच्छन्ति । तस्मादित ऊर्ध्वा एते स्तोमाश्चतुष्टोमात्मकाः क्लृप्ता अव्यतिषक्ता भवन्ति चत्वारः । तेन

भ्यो लोकयोः कल्पते त्रिꣳशदेता-
स्त्रिꣳशदक्षरा विराडन्नं विराड्विरा-
जैवान्नाद्यमव रुन्धतेऽतिरात्रावभितो
भवतोऽन्नाद्यस्य परिगृहीत्यै ॥१४॥

माः । भवन्ति । क्लृप्ताः । एव । सुवर्गमिति सुवः–गम् । लोकम् । यन्ति । उभयोः । एभ्यः । लोकयोः । कल्पते । त्रिꣳशत् । एताः । त्रिꣳशदक्षरेति त्रिꣳशत्–अक्षरा । विराडिति वि–राट् । अन्नम् । विराडिति वि–राट् । विराजेति वि–राजा । एव । अन्नाद्यमित्यन्न–अद्यम् । अवेति । रुन्धते । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । अन्नाद्यस्येत्यन्न–अद्यस्य । परिगृहीत्या इति परि–गृहीत्यै ॥ १४ ॥

ओषधीस्संवत्सर एवाव प्रतिष्ठाय ज्योतिष्कै-
कान्नपञ्चाशच्च ॥ ३ ॥

---

यजमानाः क्लृप्ता एव सुवर्गं लोकं गच्छन्ति । तस्मादुभयोर्लोकयोः त्रिंशद्रात्रं कल्पते सम्पन्नो भवतीति । त्रिंशदेता इत्यादि। गतम् । अतिरात्राभ्यां अन्नाद्यस्य परिग्रहः ॥

इति सप्तमे चतुर्थे तृतीयोनुवाकः.

---

प्रजापतिस्सुवर्गं लोकमैत्तं देवा येनयेन छन्दसाऽनु प्रायुञ्जत तेन नाप्नुवन्त एता द्वात्रिंशतꣳ रात्रीरपश्यन्द्वात्रिंशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिस्स्वेनैव छन्दसा प्रजापतिमाप्त्वाऽभ्यारुह्य सुवर्गं लोकमायन्

[1]प्रजापतिरिति प्रजा–पतिः । सुवर्गमिति सुवः–गम् । लोकम् । एत् । तम् । देवाः । येनयेनेति येन–येन । छन्दसा । अनु । प्रेति । अयुञ्जत । तेन । न । आप्नुवन् । ते । एताः । द्वात्रिंशतम् । रात्रीः । अपश्यन् । द्वात्रिंशदक्षरेति द्वात्रिंशत्–अक्षरा । अनुष्टुगित्यनु–स्तुक् । आनुष्टुभ इत्यानु–स्तुभः । प्रजापतिरिति प्रजा–पतिः । स्वेन । एव । छन्दसा । प्रजापतिमिति प्रजा–पतिम् । आप्त्वा । अभ्यारुह्येत्यभि–आरुह्य । सुवर्गमिति सु-

---

[1]अथ द्वात्रिंशद्रात्रो विधीयते—प्रजापतिरित्यादि ॥ स्वर्गं गतवन्तः प्रजापतिं नाप्नुवन् । ते देवा येनयेन छन्दसा गायत्र्यादिना प्रजापतिमनुप्रायुञ्जत प्रयुज्यमानेन येन प्रजापतिमुपासीदन् तेन सर्वेणापि न प्रजापतिमाप्नुवन् स्वर्गं च नागच्छन् । त

य एवं विद्वाꣳसं एता आसंते द्वा-
त्रिꣳशदेता द्वात्रिꣳशदक्षराऽनुष्टुगा-
नुष्टुभः प्रजापतिस्स्वेनैव छन्दसा
प्रजापतिमाप्त्वा श्रियं गच्छन्ति ॥
१५ ॥ श्रीर् हि मनुष्यस्य सुवर्गो
लोको द्वात्रिꣳशदेता द्वात्रिꣳशदक्ष-

वः–गम् । लोकम् । आयन् । ये । एवम् । विद्वा-
ꣳसः । एताः । आसंते । द्वात्रिꣳशत् । एताः ।
द्वात्रिꣳशदक्षरेति द्वात्रिꣳशत्–अक्षरा । अनुष्टु-
गित्यनु–स्तुक् । आनुष्टुभ इत्यानु–स्तुभः । प्र-
जापतिरिति प्रजा–पतिः । स्वेन । एव । छन्दसा ।
प्रजापतिमिति प्रजा–पतिम् । आप्त्वा । श्रियम् ।
गच्छन्ति ॥१५॥ श्रीः । हि । मनुष्यस्य । सुवर्ग
इति सुवः–गः । लोकः । द्वात्रिꣳशत् । एताः ।
द्वात्रिꣳशदक्षरेति द्वात्रिꣳशत्–अक्षरा । अनुष्टुगि-

---

एता इत्यादि । गतम् । आनुष्टुभः प्रजापतिरिति । सर्वविकल्पात्मकत्वात् तस्य । अनुष्टुप्छब्द उत्सादिः । स्वेनैवेति । प्राजापत्येनाभ्यारुह्य उपरि गत्वा । एता आसत इति । द्वात्रिंशतं रात्रीः । द्वात्रिंशदेता इत्यादि । गतम् । सर्वेऽपि यजमानाः वाचो वदितारो

राऽनुष्टुग्वागनुष्टुप्सर्वामेव वाचमा-
प्नुवन्ति सर्वे वाचो वदितारो भवन्ति
सर्वे हि श्रियं गच्छन्ति ज्योतिर्गौ-
रायुरिति त्र्यहा भवन्तीयं वाव ज्यो-
तिरन्तरिक्षं गौरसावायुरिमानेव लो-
कानभ्यारोहन्त्यभिपूर्वं त्र्यहा भव-
न्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारो-

त्यनु-स्तुक् । वाक् । अनुष्टुबित्यनु-स्तुप् । स-
र्वाम् । एव । वाचम् । आप्नुवन्ति । सर्वे । वाचः ।
वदितारः । भवन्ति । सर्वे । हि । श्रियम् । गच्छ-
न्ति । ज्योतिः । गौः । आयुः । इति । त्र्यहा
इति त्रि-अहाः । भवन्ति । इयम् । वाव । ज्यो-
तिः । अन्तरिक्षम् । गौः । असौ । आयुः । इमान् ।
एव । लोकान् । अभ्यारोहन्तीत्यभि-आरोहन्ति ।
अभिपूर्वमित्यभि-पूर्वम् । त्र्यहा इति त्रि-अहाः ।
भवन्ति । अभिपूर्वमित्यभि-पूर्वम् । एव । सुवर्ग-

---

वाग्मिनो भवन्ति । यस्मात्सर्वेऽपि श्रीमन्तो भवन्ति अनेन द्वा-
त्रिंशद्रात्रेण ॥

ज्योतिरित्यादिना अह्नां क्लृप्तिं दर्शयति । ज्योतिरादय उक्ताः* ।

---

*सं. ७-४-१.

हन्ति बृहद्रथन्तराभ्यां यन्ति॥१६॥
इयं वाव रथन्तरमसौ बृहदाभ्या-
मेव यन्त्यथो अनयोरेव प्रति ति-
ष्ठन्त्येते वै यज्ञस्याञ्जसाऽयनी स्रु-
ती ताभ्यामेव सुवर्गं लोकं यन्ति

मिति सुवः–गम्। लोकम्। अभ्यारोहन्तीत्यभि–आरोहन्ति। [3]बृहद्रथन्तराभ्यामिति बृहत्–रथन्तराभ्याम्। यन्ति ॥ १६ ॥ इयम्। वाव। रथन्तरमिति रथं–तरम्। असौ। बृहत्। आभ्याम्। एव। यन्ति। अथो इति। अनयोः। एव। प्रतीति। तिष्ठन्ति। एते इति। वै। यज्ञस्य। अञ्जसाऽयनी इत्यञ्जसा–अयनी। स्रुती इति। ताभ्याम्। एव। सुवर्गमिति सुवः–गम्। लोकम्। यन्ति। [4]पराञ्चः। वै। एते। सुवर्गमिति सुवः–गम्। लो-

त्र्यहा इति। एतस्य प्रतीचस्त्र्यहस्य त्रिरात्रयोश्च पृथग्वचनान्नव त्र्यहा इति गम्यते। इयमित्यादि। व्याख्यातम्* ॥

[3]बृहद्रथन्तराभ्यामित्यादि ॥ गतम्† ॥

[4]पराञ्च इत्यादि ॥ ऊर्ध्वानेव ये सर्वान् त्र्यहानुपयन्ति ते परा-

*सं. ७-४-१. †सं. ७-४-२.

पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचस्त्र्यहानुपयन्ति प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति द्वात्रिꣳशदेतास्तासां या-

कम् । अभ्यारोहन्तीत्यभि-आरोहन्ति । ये । पराचः । त्र्यहानिति त्रि-अहान् । उपयन्तीत्युप-यन्ति । प्रत्यङ् । त्र्यह इति त्रि-अहः । भवति । प्रत्यवरूढ्या इति प्रति-अवरूढ्यै । अथो इति । प्रतिष्ठित्या इति प्रति-स्थित्यै । उभयोः । लोकयोः । ऋद्ध्वा । उदिति । तिष्ठन्ति । [5]द्वात्रिꣳशत् । एताः । तासाम् । याः । त्रिꣳशत् । त्रिꣳशदक्षरेति त्रिꣳशत्-अक्षरा । विराडिति वि-राट् । अन्नम् । वि-

---

श्च एव स्वर्गमभ्यारोहेयुः । तस्मादन्त्यः त्र्यहः प्रत्यङ् प्रत्यावृत्तो भवति । तत्प्रत्यवरूढ्यै प्रतिष्ठित्यै च भवति । उभयोरिति । नवाभिरमुत्र एकेनात्र ऋद्धिं प्राप्य उत्तिष्ठन्ति यज्ञादुच्छ्रिता भवन्ति ॥

[5]द्वात्रिंशदेता इत्यादि ॥ द्वात्रिंशत्संख्यानां रात्रीणां मध्ये त्रिंशतां विराड्रूपत्वादन्नावरोधः । अथेतरे द्वे अहोरात्ररूपे तस्मादत्र

त्रि॒ꣳशत्त्रि॒ꣳशद॑क्षरा वि॒राडन्नं॑ वि॒-
राड्वि॒राजै॒वान्ना॒द्य॑मव॑ रुन्धते॒ ये द्वे
अ॑होरा॒त्रे ए॒व ते उ॒भाभ्या॑ꣳ रू॒पा-
भ्या॑ꣳ सु॒व॒र्गं लो॒कं य॑न्त्यतिरा॒त्राव॒-
भितो॑ भवतः॒ परि॑गृहीत्यै ॥ १७ ॥

राडिति॑ वि–राट् । वि॒राजेति॑ वि–राजा॑ । ए॒व । अ॒न्ना॒द्य॒मित्य॑न्न–अ॒द्य॑म् । अवेति॑ । रु॒न्ध॒ते । ये इति॑। द्वे इति॑ । अ॒हो॒रा॒त्रे इत्य॑हः--रा॒त्रे । ए॒व । ते इति॑ । उ॒भाभ्या॑म् । रू॒पाभ्या॑म् । सु॒व॒र्गमिति॑ सु॒वः–गम् । लो॒कम् । य॒न्ति । अ॒ति॒रा॒त्रावित्य॑ति–रा॒त्रौ । अ॒-भित॑ः । भ॒व॒तः । परि॑गृहीत्या॒ इति॒ परि॑–गृ॒ही॒-त्यै॒ ॥ १७ ॥

ग॒च्छ॒न्ति॒ य॒न्ति॒ त्रि॒ꣳशद॑क्षरा॒ द्वावि॑ꣳशतिश्च॥४॥

---

द्वात्रिंशद्रात्रस्य स्वे रूपे विराट् अहोरात्रलक्षणं च । तेन अहोरात्राभ्यां स्वर्गं गच्छन्ति । अतिरात्रावभितो भवतः परिग्रहाय । कस्य? विशेषावचनात् स्वर्गस्य । 'हेमन्तशिशिरावहोरात्रे च' इति नपुंसकत्वम् ॥

इति सप्तमे चतुर्थे चतुर्थोनुवाकः.

द्वे वाव देवसत्रे द्वादशाहश्चैव त्रय-
स्त्रिꣳशदहश्च य एवं विद्वाꣳसस्त्रय-
स्त्रिꣳशदहमासते साक्षादेव देवता
अभ्यारोहन्ति यथा खलु वै श्रेया-
नभ्यारूढः कामयते तथा करोति

[1]द्वे इति । वाव । देवसत्रे इति देव-सत्रे । द्वादशाह इति द्वादश-अहः । च । एव । त्रयस्त्रिꣳशदह इति त्रयस्त्रिꣳशत्-अहः । च । ये । एवम् । विद्वाꣳसः । त्रयस्त्रिꣳशदहमिति त्रयस्त्रिꣳशत्-अहम् । आसते । साक्षादिति स-अक्षात् । एव । देवताः । अभ्यारोहन्तीत्यभि-आरोहन्ति । यथा । खलु । वै । श्रेयान् । अभ्यारूढ इत्यभि-

[1]अथ त्रयस्त्रिंशद्रात्राः । तत्र प्रथमः प्रस्तूयते—द्वे वावेत्यादि ॥ देवसत्रे देवानां प्रधानभूते अभिमते सत्रे अत एव देवप्राप्तौ मुख्यसाधनभूते तस्मादेतेन त्रयस्त्रिंशदहेन साक्षादव्यवधानेन देवता अभ्यारोहन्ति सर्वपापनिवृत्तिहेतुत्वात् अस्य । 'गतिर्गतौ' इति पूर्वस्य निघातः, समासश्च । तदेवाह—यथा खल्वित्यादि । यथा लोके कश्चिच्छ्रेयान् पुरुषः अभ्यारूढः कामयते पुनरप्युच्छ्रितो भवितुं कामयते तथा च करोति तदनुरूपं च यागादि कर्मारभते तथा कुर्वन्नसौ यद्यवविध्यति तन्निर्वहणाशक्तौ यद्यवहीयते

यद्यवविध्यति पापीयान्भवति यदि नावविध्यति सदृङ्ख्य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते वि पाप्मना भ्रातृव्येणावर्तन्तेऽहर्भाजो वा एता देवा अग्र आऽहरन्न् ॥ १८ ॥ अह-

आरूढः । कामयते । तथा । करोति । यदि । अव-विध्यतीत्यव-विध्यति । पापीयान् । भवति । यदि । न । अवविध्यतीत्यव-विध्यति । सदृङ्ङिति स-दृङ् । ये । एवम् । विद्वाꣳसः । त्रयस्त्रिꣳशदहमिति त्रयस्त्रिꣳशत्-अहम् । आसते । वीति । पाप्मना । भ्रातृव्येण । एति । वर्तन्ते । [2]अहर्भाज इत्यहः-भाजः । वै । एताः । देवाः । अग्रे । एति । अहरन् ॥ १८ ॥ अहः । एकः । अभजत । अहः ।

---

पापीयान् पापतरो भवति श्रेयानेव स्यात् । अथ यदि कश्चिन्नाविध्यति सदृङ् समानरूप एव स्यात् नोत्कर्षलाभः, प्रमादसम्भावनया निर्दोषत्वनिश्चयाभावात् । त्रयस्त्रिंशदहस्तु तमपि दोषं निवर्तयतीति भ्रातृव्यभूतेन सर्वेण पाप्मना व्यावर्तन्ते व्यावृत्तिं गच्छन्ति । तस्मादनेन साक्षाद्देवता अभ्यारोहत्येवेति स्तुत्या विधीयते ॥

[2]अहर्भाज इत्यादि ॥ एकमहरेको भजते इतरमितर इत्येकैकमहर्भजमाना देवा एताः त्रयस्त्रिंशतं रात्रीराहरन् । अहरेको

रेकोऽभजताहरेकस्ताभिर्वै प्रबाहुगा-
र्ध्नुवन् य एवं विद्वाꣳसस्त्रयस्त्रिꣳश-
दहमासते सर्वं एव प्रबाहुगृध्नुवन्ति
सर्वे ग्रामणीयं प्राप्नुवन्ति पञ्चाहा
भवन्ति पञ्च वा ऋतवस्संवथ्सर
ऋतुष्वेव संवथ्सरे प्रति तिष्ठन्त्यथो

एकः । ताभिः । वै । ते । प्रबाहुगिति प्र-बाहुक् । आर्ध्नुवन् । ये । एवम् । विद्वाꣳसः । त्रयस्त्रिꣳशदहमिति त्रयस्त्रिꣳशत्-अहम् । आसते । सर्वे । एव । प्रबाहुगिति प्र-बाहुक् । ऋध्नुवन्ति । सर्वे । ग्रामणीयमिति ग्राम-नीयम् । प्रेति । आप्नुवन्ति । [3]पञ्चाहा इति पञ्च-अहाः । भवन्ति । पञ्च । वै । ऋतवः । संवत्सर इति सं-वत्सरः । ऋतुषु । एव । संवत्सर इति सं-वत्सरे । प्रतीति । तिष्ठन्ति ।

---

भजताहरेकः इति वीप्सा विस्पष्टं दर्शयति । अथ ताभिस्ते प्रबाहुक्समं आर्ध्नुवन् सर्वे । य एवमित्यादि । गतम् । ग्रामणीयं सङ्घातस्य नेतृत्वम् । ब्राह्मणादित्वात् ष्यञ् । यस्येति लोपाभावश्छान्दसः । ङित्त्वादाद्युदात्तत्वम् ॥

[3]पञ्चाहा इत्यादि ॥ अह्नां प्रदर्शनम् । पञ्चाह उक्तः । आभिप्लाविका ज्योतिरादयः अन्त्येन विधिना गृह्यन्ते । सामर्थ्यात्

पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमे-
वाव रुन्धते त्रीण्याश्विनानि भव-
न्ति त्रय इमे लोका एषु ॥ ११ ॥
एव लोकेषु प्रति तिष्ठन्त्यथो त्री-
णि वै यज्ञस्यैन्द्रियाणि तान्येवाव
रुन्धते विश्वजिद्भवत्यन्नाद्यस्यावरु-

अथो इति । पञ्चाक्षरेति पञ्च—अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धते । [4]त्रीणि । आश्विनानि । भवन्ति । त्रयः । इमे । लोकाः । एषु ॥ ११ ॥ एव । लोकेषु । प्रतीति । तिष्ठन्ति । अथो इति । त्रीणि । वै । यज्ञस्य । इन्द्रियाणि । तानि । एव । अवेति । रुन्धते । विश्वजिदिति विश्व—जित् । भवति । अन्नाद्यस्ये-

चत्वारः पञ्चाहा भवन्ति, तथाऽभिमतसङ्ख्यापूरणात् । पञ्च वा ऋतव इत्यादि । व्याख्यातम्* ॥

[4]त्रीण्याश्विनानीत्यादि ॥ आश्विनेन शस्त्रेण लक्षितानि त्रीण्यहानि अतिरात्राख्यानि । आद्यं मध्यममन्त्यं च । तैः त्रिषु लोकेषु प्रतिष्ठिता भवन्ति त्रित्वान्वयात् । अथो अपि च यज्ञस्येन्द्रियाणि त्रीणि ऋगादीनि गायत्रादीनि वा सवनानि ता-

*सं. ७-३-८.

द्ध्यै सर्वपृष्ठो भवति सर्वस्याभि-
जित्यै वाग्वै द्वादशाहो यत्पुरस्ता-
द्वादशाहमुपेयुरनाप्तां वाचमुपेयुरुप
दासुकैषां वाक्स्यादुपरिष्टाद्द्वादशाह-

त्यन्न-अद्यस्य । अवरुद्ध्या इत्यव-रुद्ध्यै । सर्वपृष्ठ इति सर्व-पृष्ठः । भवति । सर्वस्य । अभिजित्या इत्यभि-जित्यै । [5]वाक् । वै । द्वादशाह इति द्वादश-अहः । यत् । पुरस्तात् । द्वादशाहमिति द्वादश-अहम् । उपेयुरित्युप-इयुः । अनाप्ताम् । वाचम् । उपेति । इयुः । उपदासुकेत्युप-दासुका । एषाम् । वाक् । स्यात् । उपरिष्टात् । द्वादशाह-

न्यवरुन्धते । विश्वजित् मध्यममहः सर्वपृष्ठश्च भवति । तत्र विश्वजिद्धर्मतया अन्नाद्यावरोधः । सर्वपृष्ठत्वगुणेन सर्वस्य जयः । ततश्च त्रिषु पञ्चाहेषु व्यतीतेषु विश्वजित् अतिरात्रः तत्त एकाहः* पञ्चाह इति (आद्यन्तातिरात्रौ) इत्थं त्रयोविंशतिरहानि भवन्ति ॥

[5]अथ द्वादशाहः परिशिष्यते, विधातुमाह—वाग्वा इत्यादि ॥ तद्धेतुत्वात्ताच्छब्द्यम् । विश्वजितोतिरात्रात् पुरस्ताद्यदि द्वादशाहमुपेयुः अनाप्तां अपर्याप्तां मन्त्रैः क्षीणां उपेयुः । ततश्चोपदासुका उपक्षयशीला यजमानानां वाक् स्यात् । छान्दस उकञ् । तस्मादुप-

*एकः

मुप यन्त्याप्तामेव वाचमुप यन्ति
तस्मादुपरिष्टाद्वाचा वदामोऽवान्तरम्
॥ २० ॥ वै दशरात्रेण प्रजापतिः
प्रजा असृजत यद्दशरात्रो भवति
प्रजा एव तद्यजमानास्सृजन्त ए-

मिति द्वादश–अहम् । उपेति । यन्ति । आप्ताम् । एव । वाचम् । उपेति । यन्ति । तस्मात् । उपरिष्टात् । वाचा । वदामः । [6]अवान्तरमित्यव–अन्तरम् ॥ २० ॥ वै । दशरात्रेणेति दश–रात्रेण । प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः । असृजत । यत् । दशरात्र इति दश–रात्रः । भवति । प्रजा इति प्र–जाः । एव । तत् । यजमानाः । सृजन्ते । एताम् । ह । वै । उदङ्कः । शौ-

रिष्टादेव द्वादशाहमुपयन्ति । आप्तामेव वाचमुपयन्ति । तस्मात् उपरिष्टात् ऊर्ध्वं नाभेर्वर्तमानतया उच्छ्रिततया सर्वेऽपि वयं वदामः ॥

[6]इदानीं द्वादशाहीयं दशरात्रमुपादित्समानः स्तौति—अवान्तरमित्यादि ॥ द्वादशाहावयवभूतेन दशरात्रेणेत्यर्थः । पुनरपि स्तौति—एतामित्यादि । शुल्बस्य उदङ्को नाम पुत्र एतामेव दशरात्रात्मिकां सत्रस्य द्वादशाहस्य ऋद्धिं सत्रफलस्य वाचस्समृद्धिं समृद्धिहेतुमुवाच । यद्वा—सत्रस्य त्रयस्त्रिंशद्रात्रस्य ऋद्धिं फल-

ताꣳ ह वा उदङ्कश्शौल्बायनस्सत्रस्यर्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्द्ध्या अथो यदेव पूर्वेष्वहस्सु विलोम क्रियते तस्यैवैषा शान्तिर्द्व्यनीका वा एता रात्रयो यजमाना विश्वजित्सहातिरात्रेण

ल्बायनः । सत्रस्य । ऋद्धिम् । उवाच । यत् । दशरात्र इति दश—रात्रः । यत् । दशरात्र इति दश—रात्रः । भवति । सत्रस्य । ऋ-द्ध्यै । अथो इति । यत् । एव । पूर्वेषु । अहस्स्विवत्यहः—सु । विलोमेति वि—लोम । क्रियते । तस्य । एव । एषा । शान्तिः । [7]द्व्यनीका इति द्वि—अनीकाः । वै । एताः । रात्रयः । यजमानाः । विश्वजिदिति विश्व—जित् । सह । अतिरात्रेणेत्य-

---

समृद्धिहेतुं एतद्दशरात्रमुवाच । तस्माद्दशरात्रः सत्रस्य ऋद्ध्यै भवति । अथो अपि च यत्पूर्वेष्वहस्सु प्रमादाद्विलोम विगुणं क्रियते तस्य शान्तिरेषैवेति वेदितव्यम् ॥

[7]द्व्यनीका इत्यादि ॥ द्व्यनीकाः द्विव्यूहाः । निरुद्रकादित्वादुत्तरपदान्तोदात्तत्वम् । तत्रातिरात्रादिषोडशक आद्यो व्यूहः ।

पूर्वाष्षोडश सहातिरात्रेणोत्तराष्षो-
डश य एवं विद्वाꣳसस्त्रयस्त्रिꣳ-
शदहमासत ऐषां द्व्यनीका प्रजा
जायतेऽतिरात्रावभितो भवतः परि-
गृहीत्यै ॥ २१ ॥

ति-रात्रेण । पूर्वाः । षोडश । सह । अतिरात्रेणे-त्यति-रात्रेण । उत्तरा इत्युत्-तराः । षोडश । ये । एवम् । विद्वाꣳसः । त्रयस्त्रिꣳशदहमिति त्रयस्त्रिꣳशत्-अहम् । आसत । एति । एषाम् । द्व्यनीकेति द्वि-अनीका । प्रजेति प्र-जा । जायते । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । परिगृहीत्या इति परि-गृहीत्यै ॥ २१ ॥

अहरन्नेष्ववान्तरꣳ षोडश सह सप्तदश च ॥५॥

---

अतिरात्रान्त अन्यो व्यूहः । तयोरन्तर्विश्वजिदतिरात्रः यजमानात्मा । तदिदमाह—यजमाना विश्वजिदित्यादि । द्व्यनीका स्त्रीपुंसात्मकव्यूहद्वयवती प्रजा आजायते सर्वतो जायते । अभितोऽतिरात्रौ सामर्थ्यात् उक्तानां फलानां परिग्रहाय भवतः ॥

इति सप्तमे चतुर्थे पञ्चमोनुवाकः

आदित्या अकामयन्त सुवर्गं लो-
कमियामेति ते सुवर्गं लोकं न प्रा-
जानन्न सुवर्गं लोकमायन्त एतꣳ
षड्त्रिꣳशद्रात्रमपश्यन्तमाऽहरन्तेना-
यजन्त ततो वै ते सुवर्गं लोकं प्रा-
जानन्थ्सुवर्गं लोकमायन् य एवं
विद्वाꣳसः षड्त्रिꣳशद्रात्रमासते सुव-
र्गमेव लोकं प्र जानन्ति सुवर्गं लोकं

[1]आदित्याः । अकामयन्त । सुवर्गमिति सुवः—गम् । लोकम् । इयाम । इति । ते । सुवर्गमिति सुवः—गम् । लोकम् । न । प्रेति । अजानन्न् । न । सुवर्गमिति सुवः—गम् । लोकम् । आयन्न् । ते । एतम् । षड्त्रिꣳशद्रात्रमिति षड्त्रिꣳशत्—रात्रम् । अपश्यन्न् । तम् । एति । अहरन्न् । तेन । अयजन्त । ततः । वै । ते । सुवर्गमिति सुवः—गम् । लोकम् । प्रेति । अजानन्न् । सुवर्गमिति सुवः—गम् । लोकम् । आयन्न् । ये । एवम् । विद्वाꣳसः । षड्त्रिꣳशद्रात्रमिति षड्त्रिꣳशत्—रात्रम् ।

---

[1]अथ षड्त्रिंशद्रात्रो विधीयते—आदित्या इत्यादि ॥ गतम् ।

यन्ति ज्योतिरतिरात्रः ॥ २२ ॥ भ-
वति ज्योतिरेव पुरस्ताद्दधते सुवर्ग-
स्य लोकस्यानुख्यात्यै षडहा भंव-
न्ति षड्वा ऋतवं ऋतुष्वेव प्रति ति-
ष्ठन्ति चत्वारो भवन्ति चतस्रो दि-

आसंते । सुवर्गमिति सुवः—गम् । एव । लोकम् । प्रेति । जानन्ति । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । ज्योतिः । अतिरात्र इत्यति—रात्रः ॥ २२ ॥ भवति । ज्योतिः । एव । पुरस्तात् । दधते । सुवर्गस्येति सुवः—गस्य । लोकस्य । अनुख्यात्या इत्यनु—ख्यात्यै । षडहा इति षट्—अहाः । भवन्ति । षट् । वै । ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठन्ति । चत्वारः । भवन्ति । चतस्रः । दिशः । दिक्षु । एव । प्रतीति । तिष्ठन्ति ।

ते सुवर्गं लोकं न प्राजानन् न चागच्छन् । ज्योतिरित्यादि । व्याख्यातम्* ॥

°षडहा इति ॥ अभिप्लवाः । ते चोक्ताः । चत्वार इति । तेनातिरात्रेण सह पञ्चविंशतिः ॥

*सं. ७-२-६,

शो दिक्ष्वेव प्रति तिष्ठन्त्यसत्त्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्त्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव ॥ २३ ॥ वीर्ये पशुषु प्रति तिष्ठन्ति षड्त्रिꣳशद्रात्रो भवति षड्त्रिꣳशदक्षरा बृह-

[3]असत्त्रम् । वै । एतत् । यत् । अछन्दोममित्यछन्दः–मम् । यत् । छन्दोमा इति छन्दः–माः । भवन्ति । तेन । सत्त्रम् । देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरिति छन्दः–मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमा इति छन्दः–माः । ओजसि । एव ॥ २३ ॥ वीर्ये । पशुषु । प्रतीति । तिष्ठन्ति । [4]षड्त्रिꣳशद्रात्र इति षड्त्रिꣳशत्–रात्रः । भवति । षड्त्रिꣳशदक्षरेति

---

[3]असत्रं वा इत्यादि ॥ द्वादशाहीयस्य दशरात्रस्य विधिर्गतः*॥

[4]षड्त्रिंशद्रात्र इति ॥ वक्ष्यमाणेन अतिरात्रेण सह । बार्हताः पशव इति तस्याः पशुसिद्धिहेतुत्वात् । तेन च षड्त्रिंशत्सङ्ख्यान्व-

---

*सं, ७-३-८,

ती बार्हताः पशवो बृहत्यैव पशू-
नवं रुन्धते बृहती छन्दसा२ँ स्वा-
राज्यमाश्नुताश्नुवते स्वाराज्यं य ए-
वं विद्वा२ँसंष्षट्त्रि२ँशद्रात्रमासते सु-
वर्गमेव लोकं यन्त्यतिरात्रावभितो
भवतस्सुवर्गस्य लोकस्य परिगृही-
त्यै ॥ २४ ॥

षट्त्रि२ँशत्–अक्षरा । बृहती । बार्हताः । पशवः । बृहत्या । एव । पशून् । अवेति । रुन्धते । बृहती । छन्दसाम् । स्वाराज्यमिति स्व–राज्यम् । आश्नुत । अश्नुवते । स्वाराज्यमिति स्व–राज्यम् । ये । एवम् । विद्वा२ँसः । षट्त्रि२ँशद्रात्रमिति षट्त्रि२ँश-त्–रात्रम् । आसते । सुवर्गमिति सुवः–गम् । एव । लोकम् । यन्ति । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । सुवर्गस्येति सुवः–गस्य । लो-

---

येन बार्हतान् पशून् अवरुन्धते । बृहतीशब्द उत्सादिरित्युक्तम् । बृहती छन्दसामित्यादि । यस्माद्बृहती छन्दसां स्वाराज्यमाश्नुत आधिपत्यं प्राप्तवती तस्मादेवं विद्वांसो यजमाना राज्यमश्नुवते स्वर्गं च गच्छन्ति । अतिरात्रौ चाभितो भवतः स्वर्गस्यैव परिग्रहाय ।

वसिष्ठो हतपुत्रोकामयत विन्देयं प्रजामभि सौदासान्भवेयमिति स एतमेकस्मान्नपञ्चाशमपश्यत्तमाऽहरत्तेनायजत ततो वै सोविन्दत प्र-

कस्यै । परिगृहीत्या इति परि–गृहीत्यै ॥ २४ ॥

अतिरात्र ओजस्येव षड्विꣳशच्च ॥ ६ ॥

[1]वसिष्ठः । हतपुत्र इति हत–पुत्रः । अकामयत । विन्देयं । प्रजामिति प्र–जाम् । अभीति । सौदासान् । भवेयम् । इति । सः । एतम् । एकस्मान्नपञ्चाशमित्येकस्मात्–नपञ्चाशम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः ।

---

समानवाक्ये पदात्परत्वाभावात्तिङ्परत्वाद्वा अश्नुवत इति न निहन्यते । स्वाराज्यं स्वराट्छब्दात् 'गुणवचनब्राह्मणादिभ्यः' इतिष्यञ् ॥

इति सप्तमे चतुर्थे षष्ठोनुवाकः

---

[1]अथैकस्मान्नपञ्चाशद्रात्राः । तत्रायं प्रथमो विधीयते—वसिष्ठ इत्यादि ॥ वसिष्ठः सौदासैः हतपुत्रोकामयत प्रजां विन्देय लिप्सीय सौदासाश्चाभिभवेयमिति । सुदासस्यापत्यानि सौदासाः, ऋष्यण् । एकस्मान्नपञ्चाशमिति । एकेन ऊनेन पंचाशन्न भवतीति एकान्नपञ्चाशत् । 'एकादिश्चैकस्य चादुक्' इति नञः प्रकृत्या

जामभि सौदासानभवन्य एवं वि-
द्वाꣳसं एकस्मान्नपञ्चाशमासंते वि-
न्दन्तें प्रजामभि भ्रातृंव्यान्भवन्ति
त्रयंस्त्रिवृतोंऽग्निष्टोमा भंवन्ति वज्रं-
स्यैव मुखꣳ सꣳ श्यंन्ति दश पञ्च-

वै । सः । अविन्दत । प्रजामितिं प्र—जाम् । अ-
भीतिं । सौदासान् । अभवत् । ये । एवम् । वि-
द्वाꣳसंः । एकस्मान्नपञ्चाशमित्यैकस्मात्—नपञ्चा-
शम् । आसंते । विन्दन्तें । प्रजामितिं प्र—जाम् ।
अभीतिं । भ्रातृंव्यान् । भवन्ति । [2]त्रयंः । त्रिवृत
इतिं त्रि—वृतंः । अग्निष्टोमा इत्यंग्नि—स्तोमाः ।
भवन्ति । वज्रंस्य । एव । मुखम् । समितिं । श्य-

भावः, आडुगागमश्च । (सकारमकारावुपजातौ) । अलुग्वा पञ्चम्याः छान्दसः । 'तस्य पूरणे डट्' इति डट् । अवयवधर्मेण समुदायो व्यपदिश्यते । परिमाणे वा छान्दसो डः । य एवं विद्वांस इत्यादि । गतम् ॥

[2]त्रयस्त्रिवृत इति ॥ त्रिवृत् स्तोमकास्त्रयोऽग्निष्टोमा भवन्ति त्रिवृतो वज्रत्वात् तत्र मुखं श्यन्ति तीक्ष्णीकुर्वन्ति पौनःपुन्येन । यद्वा—भ्रातृव्याभिभवहेतुतया वज्रस्थानीयस्यास्य सत्रस्य मुखं त्रिभिस्त्रिवृद्भिः तीक्ष्णीकुर्वन्तीति । दशेति । पञ्चदशस्तोमकानि दशा-

दशा भवन्ति पञ्चदशो वज्रः ॥२५॥
वज्रमेव भ्रातृव्येभ्यः प्र हरन्ति
षोडशिमद्दशममहर्भवति वज्र एव
वीर्यं दधति द्वादश सप्तदशा भव-
न्त्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तै-

न्ति । दश । पञ्चदशा इति पञ्च–दशाः । भवन्ति । पञ्चदश इति पञ्च–दशः । वज्रः ॥ २५ ॥ वज्रम् । एव । भ्रातृव्येभ्यः । प्रेति । हरन्ति । [3]षोडशिमदिति षोडशि–मत् । दशमम् । अहः । भवति । वज्रे । एव । वीर्यम् । दधति । द्वादश । सप्तदशा इति सप्त–दशाः । भवन्ति । अन्नाद्यस्येत्यन्न–अद्यस्य । अवरुद्ध्या इत्यव–रुद्ध्यै । अथो इति । प्रे-

---

हानि भवन्ति अग्निष्टोमा इत्यधिकृत्य पञ्चदश उक्थ्या इत्याचार्यः । पञ्चदश इत्यादि । वीर्यवत्त्वेन वज्रवद्भ्रातृव्याभिभवहेतुत्वात् ॥

[3]षोडशिमदिति ॥ एषां दशममहष्षोडशिमद्भवति, षोडशधर्मवत् । वज्रो वीर्यं ससामर्थ्यं दधति जनयति । द्वादशेति । सप्तदशस्तोमकानि द्वादशाहानि भवन्ति । अन्नाद्यस्येति । सप्तदशस्यान्नाद्यहेतुत्वात् । अथो अपि च तैस्सप्तदशैः प्रजायन्ते च प्रजासाधनत्वात् सप्तदशस्य ॥

जायन्ते पृष्ठ्यष्षडहो भवति षड्वा ऋतवष्षट्पृष्ठानि पृष्ठैरेवर्तूनन्वारोह-न्त्यृतुभिस्संवथ्सरं ते संवथ्सर एव प्रति तिष्ठन्ति द्वादशैकविꣳशा भव-न्ति प्रतिष्ठित्या अथो रुचमेवात्मन्न् ॥ २६ ॥ दधते बहर्वष्षोडशिनोभ-

ति । एव । तैः । जायन्ते । पृष्ठ्यः । षडह इति षट्-अहः । भवति । षट् । वै । ऋतवः । षट् । पृष्ठानि । पृष्ठैः । एव । ऋतून् । अन्वारोहन्तीत्यनु-आरोहन्ति । ऋतुभिरित्यृतु-भिः । संवत्सरमिति सं-वत्सरम् । ते । संवत्सर इति सं-वत्सरे । एव । प्रतीति । तिष्ठन्ति । द्वादश । एकविꣳशा इत्येक-विꣳशाः । भवन्ति । प्रतिष्ठित्या इति प्रति-स्थित्यै । अथो इति । रुचम् । एव । आ-

पृष्ठ्य इत्यादि ॥ व्याख्यातम्* । द्वादशेति । एकविंशस्तोमकानि द्वादशाहानि भवन्तीति । प्रतिष्ठित्या इत्यादि । एकविंशस्य प्रतिष्ठाहेतुत्वमुक्तम् । अथो अपि च रुचं दीप्तिं आत्मन्येव दधते । रुग्वा एकविंश इत्यादि । तत्साधनत्वात्तस्य ॥

*सं. ७-४-२.

वन्ति विजित्यै षडाश्विनानि भव-
न्ति षड्वा ऋतव ऋतुष्वेव प्रति ति-
ष्ठन्त्यूनातिरिक्ता वा एता रात्रय ऊ-
नास्तद्यदेकस्यै न पञ्चाशदतिरिक्ता-
स्तद्यद्भूयसीरष्टाचत्वारिꣳशत ऊना-

त्मन्न् ॥ २६ ॥ दधते । [5]बहवः । षोडशिनः । भ-
वन्ति । विजित्या इति वि–जित्यै । षट् । आश्वि-
नानि । भवन्ति । षट् । वै । ऋतवः । ऋतुषु ।
एव । प्रतीति । तिष्ठन्ति । [6]ऊनातिरिक्ता इत्यून–
अतिरिक्ताः । वै । एताः । रात्रयः । ऊनाः । तत् ।
यत् । एकस्यै । न । पञ्चाशत् । अतिरिक्ता इत्य-
ति–रिक्ताः । तत् । यत् । भूयसीः । अष्टाचत्वा-

---

[5]बहव इति ॥ अनन्तरोक्तेष्वेकविंशेषु अनन्तरं वक्ष्यमाणेषु वा बहवष्षोडशिनो भवन्ति विजयाय । षडाश्विनानीति । अतिरात्रा अन्ते पञ्च आदावेकइत्याचार्य आह प्रथमं............पञ्च [प्रथमः पञ्चमः] षोडश एकान्नत्रिंशत्, षट्त्रिंशत्, एकान्न पञ्चाशच्च षडतिरात्राः । षड्वा इत्यादि । गतम् ॥

[6]ऊनातिरिक्ता वा इत्यादि ॥ एता एकान्नपञ्चाशद्रात्रयः ऊनाश्चातिरिक्ताश्च । कथमूनत्वं कथमतिरिक्तत्वमित्याह—ऊनास्तदित्यादि । यत् यस्मादेताः रात्रयः एकस्यै एकया । व्यत्ययेन

च॒ खलु॒ वा अतिरिक्ता॒च्च प्र॒जाप॑ति॒ः प्राजा॑यत॒ ये प्र॒जाका॑माः प॒शुका॑मा॒-

रिꣳशत॒ इत्य॒ष्टा-च॒त्वा॒रि॒ꣳश॒तः । ऊ॒नात् । च॒ । खलु॑ । वै । अति॑रिक्ता॒दित्यति॑-रि॒क्तात् । च॒ । प्र॒जाप॑ति॒रिति॑ प्र॒जा-प॒ति॒ः । प्रेति॑ । अ॒जा॒य॒त॒ । ये । प्र॒जाका॑मा॒ इति॑ प्र॒जा-का॒मा॒ः । प॒शुका॑मा॒ इति॑ प॒शु-का॒मा॒ः । स्युः । ते । ए॒ताः । आ॒सी॒र॒न् ।

तृतीयार्थे चतुर्थी । न पञ्चाशत् पञ्चाशन्न भवति पञ्चाशत्संख्यां न लभन्ते । तस्मादूनाः । यस्माच्च अष्टाचत्वारिंशतो भूयसीः भूयस्यः अष्टाचत्वारिंशत्संख्यामतीत्य वर्तन्ते तस्मादतिरिक्ताः । अष्टाचत्वारिंशदक्षरा जगती जागताः पशवो द्विपादश्चतुष्पादश्च सर्वे विराड्दशाक्षराः पञ्च विराजः पञ्चाशद्विराट् चान्नं तच्च सर्वाः प्रजाः । किं च ऊनाच्चातिरिक्ताच्च कारणवस्तुनः प्रजापतिः प्राजायत प्रजाः प्राजनयत् सर्वाः, तद्धि औपाधिकेन रूपेण ऊनं पारमार्थिकेन चे अतिरिक्तं सर्वातिशायीति । एवमपि प्रजाकारणेन संख्याद्वयेन ऊनातिरिक्तस्वरूपतापदेन उपजायमाना एकान्नपञ्चाशत्संख्या ऊनातिरिक्तस्वभावशालि परकारणवस्तु*सदृशीभवतीति । एता एकान्नपञ्चाशतं रात्रीरासित्वा प्रजया पशुभिश्च प्रजायन्ते यजमानाः कारणगतस्योनातिरिक्तस्याभावात् पञ्चाशदष्टाचत्वारिंशत्संख्ययोः अकारणत्वमेवेति भावः । अष्टौ चत्वारिंशच्च अष्टा-

*कारणावस्था,

स्स्युस्त एता आसीरन्प्रैव जायन्ते प्रजया पशुभिर्वैराजो वा एष यज्ञो यदेकस्मान्नपञ्चाशो य एवं विद्वाꣳसं एकस्मान्नपञ्चाशमासते विराजमेव गच्छन्त्यन्नादा भवन्त्यतिरात्रावभितो भवतोन्नाद्यस्य परिगृहीत्यै ॥ २७ ॥

प्रेति । एव । जायन्ते । प्रजयेति प्र-जया । पशुभिरिति पशु-भिः । [7]वैराजः । वै । एषः । यज्ञः। यत् । एकस्मान्नपञ्चाश इत्येकस्मात्-नपञ्चाशः । ये । एवम् । विद्वाꣳसः । एकस्मान्नपञ्चाशमित्येकस्मात्-नपञ्चाशम् । आसते । विराजमिति वि-राजम् । एव । गच्छन्ति । अन्नादा इत्यन्न-अदाः। भवन्ति । अतिरात्रावित्यति-रात्रौ । अभितः ।

---

चत्वारिंशत् । 'अष्टनस्सङ्ख्यायाम्' इत्यात्वम्, 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[7]किञ्चेत्याह—वैराज इत्यादि ॥ इदानीं सप्तमस्य प्रजाकारणस्य अन्नस्य साधनभावेन ताद्रूप्यमुपचर्य स्तुतिः क्रियते विराडेव वैराजः । स्वार्थिकोऽण् । यद्वा—विराजस्साधनभावेन संबन्धी वैराजः । विराजमिति । प्रभूतमन्नं प्राप्नुवन्ति । अन्नादाश्च

संवथ्सराय दीक्षिष्यमाणा एकाष्ट-
कायां दीक्षेरन्नेषा वै संवथ्सरस्य प-

भवतः । अन्नाद्यस्येत्यंन्न—अद्यस्य । परिंगृहीत्या
इति परिं—गृहीत्यै ॥ २७ ॥
वज्रं आत्मन्प्रजया द्वाविंशतिश्च ॥ ७ ॥
[1]संवत्सरायेतिं सं—वत्सराय । दीक्षिष्यमाणाः।
एकाष्टकायामित्यैक—अष्टकायाम् । दीक्षेरन्न् । एषा।
वै । संवत्सरस्येतिं सं—वत्सरस्य । पत्नीं । यत् ।

भवन्तीति । अतिरात्राविति उक्तयोरेवानुवादः अन्नाद्यपरिग्रहा-
भिधानार्थः ॥

इति सप्तमे चतुर्थे सप्तमोनुवाकः ॥

[1]इत उत्तरं गवामयनम्—'गावो वा एतत्सत्रमासत' *इत्यादि च वक्ष्यति । तत्र दीक्षारम्भकालं विदधाति—संवत्सरायेत्यादि ॥ संवत्सरकालसाध्यं गवामयनं संवत्सरशब्देनोच्यते । प्रकृतिश्चेयं सांवत्सरिकाणां आदित्यानामयनादीनां संवत्सरार्थं दीक्षिष्यमाणा दीक्षितुकामा एकाष्टकायां दीक्षेरन् । माघकृष्णाष्टमी एकाष्टका । यदाहुः—'या माघ्याः पौर्णमास्या उपरिष्टाद्व्यष्टका तस्यामष्टमी ज्येष्ठया संपद्यते तामेकाष्टकेत्याचक्षते' इति । एकाष्टका प्रधानाष्टका । 'पूर्वकालैक' इति समासः । 'अष्टका पितृदैवत्ये' इतीत्वाभावः । तत्कालसाध्यं च कर्म दर्शादिवदुपचारेणोच्यते । तत्र कालवृत्तेः कर्मण्युपचारः, अत्र तु कर्मवृत्तेरुपचार इति ।

*सं. ७-५-१.

त्नी यदेकाष्टकैतस्यां वा एष एताꣳ रात्रिं वसति साक्षादेव संवथ्सरमारभ्यं दीक्षन्त आर्तं वा एते संव-

एकाष्टकेत्येक—अष्टका । एतस्याम् । वै । एषः । एताम् । रात्रिम् । वसति । साक्षादिति स—अक्षात् । एव । संवत्सरमिति सं—वत्सरम् । आरभ्येत्या—रभ्यं । दीक्षन्ते । [2]आर्तम् । वै । एते । संवत्सरस्येति सं—वत्सरस्यं । अभीति । दीक्षन्ते । ये ।

एषा वा इति । एषा एकाष्टका कर्मात्मिकेति संवत्सरस्य कर्मात्मनः पत्नी पत्नीस्थानीया संवत्सरभाविनां कर्मणां पालयित्री एषेत्युक्तम् । केत्याह—यदेकाष्टकेति । कः पुनरस्या विशेष इत्याह—एतस्यामित्यादि । एतस्यामेकाष्टकायां कर्मात्मिकायां एष संवत्सरो वसति एतां रात्रिं कालात्मिकामेकाष्टकाम् । 'अत्यन्तसंयोगे द्वितीया' । एतस्यां रात्रावित्यर्थः । तस्मात् साक्षात् समस्तमेव संवत्सरमारभ्य परिगृह्य दीक्षन्ते ॥

[2]एतद्दूपयति—आर्त वा इत्यादि ॥ संवत्सरसंबद्धं यदिदं आर्तियुक्तं स्थानं तदभिलक्ष्य दीक्षन्ते एते । 'अभिरभागे' इति लक्षणे अभेः कर्मप्रवचनीयत्वम् । कस्मादित्याह—यस्मादेकाष्टकायां दीक्षन्त इति । हेतुगर्भमिदम् । तदपि कुत इत्याह—अन्तनामानाविति । ऋत्ववयवे मासे ऋतुशब्दः, यथा 'मधुश्च माधवश्च वासन्तिकावृतू'* इति । एतौ हि तैषमाघौ मासौ संवत्स-

*सं ४.४.११.

थ्सरस्याभि दीक्षन्ते य एकाष्टका-
यां दीक्षन्तेऽन्तनामानावृतू भवतो
व्यस्तं वा एते संवथ्सरस्याभि दी-

एकाष्टकायामित्येक–अष्टकायाम् । दीक्षन्ते । अ-
न्तनामानावित्यन्त–नामानौ । ऋतू इति । भवतः ।
[3]व्यस्तमिति वि–अस्तम् । वै । एते । संवत्सरस्ये-
ति सं–वत्सरस्य । अभीति । दीक्षन्ते । ये । एका-
ष्टकायामित्येक–अष्टकायाम् । दीक्षन्ते । अन्तना-

---

रस्यान्तनामानौ अन्तिमाख्यौ यत्र सर्वेऽपि स्थावरजङ्गमाः शीतेन पीड्यन्ते । तस्मादेतावार्तिस्थानमिति । अन्य आहुः—अन्तो विनाशः तत्कारिणावेतौ मासौ हिमेन प्रजानामिति । नैरुक्ता आहुः—अन्तशब्देन प्राणा उच्यन्ते 'यदेदन्ता अदद्हन्त पूर्वे'* इति । अननदन्ताः प्राणिनः । औणादिकस्तः । तेषां नामयितारौ नाशयितारौ शीतपीडयेति अन्तनामानाविति । 'नामन्' इति निहन्यते । अनयोः पक्षयोः दासीभारादिर्द्रष्टव्यः । एवं प्राणिस्वभावाद्यजमाना अपि पीड्येरन्निति ॥

[3]अथ दोषान्तरमप्याह—व्यस्तमित्यादि ॥ व्यस्तं विक्षिप्तं प्रदेशमभि एते दीक्षन्ते । कस्मादित्याह—यस्मादेकाष्टकायां दीक्षन्ते इति हेतुत्वेन योज्यम् । तदपि कुत इत्याह—अन्तनामानाविति । अन्तावेतौ संवत्सरस्य मासौ तत्र दीक्षन्ते । स च संवत्सरस्समाप्तः संवत्सरान्ते यज्ञ इति विक्षिप्तमेतत् भवति

---

*सं ४-६-२.

क्षन्ते य एकाष्टकायां दीक्षन्तेऽन्त-
नामानावृतू भवतः फल्गुनीपूर्ण-
मासे दीक्षेरन्मुखं वा एतत् ॥२८॥
संवथ्सरस्य यत्फल्गुनीपूर्णमासो मु-
खत एव संवथ्सरमारभ्य दीक्षन्ते
तस्यैकैव निर्या यथ्सांमेघ्ये विषू-

मानावित्यन्त–नामानौ । ऋतू इति । भवतः । [4]फल्गुनीपूर्णमास इति फल्गुनी–पूर्णमासे । दीक्षेरन् । मुखम् । वै । एतत् ॥ २८ ॥ संवत्सरस्येति सं–वत्सरस्य । यत् । फल्गुनीपूर्णमास इति फल्गुनी–पूर्णमासः । मुखतः । एव । संवत्सरमिति सं–वत्सरम् । आरभ्येत्या–रभ्य । दीक्षन्ते ।

---

संवत्सराख्यं कर्म, संवत्सरस्य विक्षिप्तत्वात् । व्यस्तमिति । गतिस्वरे कृते 'उदात्तस्वरितयोर्यणः स्वरितः' इति धात्वकारस्स्वर्यते ॥

[4]एवं दूषयित्वा पक्षान्तरं परिगृह्णाति—फल्गुनीपूर्णमास इत्यादि ॥ फल्गुन्या युक्तः पूर्णमासः फल्गुनीपूर्णमासः । मुख वा इति । अत्र केचिदाहुः—फाल्गुनादिः संवत्सर इति । तन्मतं मुखत एव संवत्सरं परिगृह्य दीक्षा कृता भवति । आद्यादिभ्यस्तसिः ॥

वान्थ्सं पद्यंते चित्रापूर्णमासे दीक्षे-
रन्मुखं वा एतथ्संवथ्सरस्य यच्चि-
त्रापूर्णमासो मुंखत एव संवथ्सर-
मारभ्यं दीक्षन्ते तस्य न का चन

[5]तस्यं । एकां । एव । निर्येतिं निः–या । यत् । सांमेंघ्य इति सां–मेघ्ये । विषूवानितिं विषु–वान् । संपद्यंत इतिं सं–पद्यंते । चित्रापूर्णमास इतिं चित्रा–पूर्णमासे । दीक्षेरन्न् । मुखंम् । वै । एतत् । संवत्सरस्येतिं सं–वत्सरस्यं । यत् । चित्रापूर्णमास इतिं चित्रा–पूर्णमासः । मुखतः । एव । संव-

---

[5]अथैनमपि पक्षं दूषयितुमाह—तस्यैकैवेत्यादि ॥ तस्य एक पक्षस्य । यद्वा—तस्य फल्गुनीपूर्णमासे दीक्षित्वा क्रियमाणस्य संवत्सरयज्ञस्य एकैव निर्या निकृष्टा प्राप्तिः दोष इति यावत्। 'आतश्चोपसर्गे' इत्यङ् । का पुनस्सेत्याह—यदिति । संगता मेघाः अस्मिन्निति संमेघो वर्षाः संमेघा एव सांमेघ्यम् । चतुर्वर्णादि-त्वात् ष्यञ् स्वार्थे । तत्र विषूवान् संपद्यते अहःक्रमेण संप-द्येत् । तत्र एकाशीतितममहरेकविंशोऽग्निष्टोमो विषूवान् । वि-ष्वंञ्चि नाना गच्छतीति अहानि पुरस्ताच्चास्येति विषूवान् । 'अ-न्येषामपि दृश्यते' इति दीर्घत्वम् । 'ह्रस्वनुड्भ्याम्' इति म-तुप उदात्तत्वम् । अस्मिन्पक्षे एष दोषः, तथा हि—तत्रादित्यं दृष्ट्वा यत्कर्तव्यं तन्न भवेत् । अतः पक्षान्तरं परिगृह्णाति—

निर्या भवति चतुरहे पुरस्तात्पौर्ण-
मास्यै दीक्षेरन्तेषामेकाष्टकायां क्र-
यस्सं पद्यते तेनैकाष्टकां न छम्बट्कु-
र्वन्ति तेषाम् ॥ २१ ॥ पूर्वपक्षे सु-
त्या सं पद्यते पूर्वपक्षं मासा अभि

त्सरमिति सं—वत्सरम् । आरभ्येत्या—रभ्य । दी-
क्षन्ते । तस्य । न । का । चन । निर्येति निः—या ।
भवति । [6]चतुरह इति चतुः—अहे । पुरस्तात् । पौ-
र्णमास्या इति पौर्ण—मास्यै । दीक्षेरन् । तेषाम् ।
एकाष्टकायामित्येक—अष्टकायाम् । क्रयः । समि-
ति । पद्यते । तेन । एकाष्टकामित्येक—अष्टकाम् ।
न । छम्बट् । कुर्वन्ति । तेषाम् ॥ २१ ॥ पूर्वपक्ष
इति पूर्व—पक्षे । सुत्या । समिति । पद्यते । पूर्व-
पक्षमिति पूर्व—पक्षम् । मासाः । अभि । समिति ।

---

चित्रापूर्णमास इत्यादि । गतम् । चैत्रादिस्संवत्सर इति येषां मतं तदिदानीमुच्यते न का चन निर्या न कश्चित् दोषः ॥

[6]अधुना प्रथममेव पक्षं परिगृह्याह—चतुरह इत्यादि ॥ माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे दीक्षमाणानामेकस्तावदयं गुणः । एकाष्टकायां त्वछम्बट्कारः । किंच तेषां पूर्वपक्षे सुत्या संपद्यते । 'संज्ञायां समज' इति क्विपि उदात्त इति हि तत्रानुवर्तयन्ति।

सं पंद्यन्ते ते पूर्वपक्ष उत्तिष्ठन्ति ता-
नुत्तिष्ठंत ओषंधयो वनस्पतयोऽनू-
त्तिंष्ठन्ति तान्कंल्याणी कीर्तिरनूत्तिं-
ष्ठत्यरांथ्सुरिमे यजंमाना इति तद-
नु सर्वें राध्नुवन्ति ॥ ३० ॥

पद्यन्ते । ते । पूर्वपक्ष इति पूर्व–पक्षे । उदिति । तिष्ठन्ति । तान् । उत्तिष्ठंत इत्युत्–तिष्ठंतः । ओषंधयः । वनस्पतंयः । अनु । उदिति । तिष्ठन्ति । तान् । कल्याणी । कीर्तिः । अनु । उदिति । तिष्ठति । अरांत्सुः । इमे । यजंमानाः । इति । तत् । अन्विति । सर्वें । राध्नुवन्ति ॥ ३० ॥

एतच्छुम्बकुर्वन्ति तेषां चतुस्त्रिंशच्च ॥ ८ ॥

---

सर्वेऽपि मासाः पूर्वपक्षमभिसंपद्यन्ते । पूर्वपक्ष एवारभ्यन्ते । पूर्वपक्ष एव च संतिष्ठन्ते । ते च यजमानाः पूर्वपक्ष एवोत्तिष्ठन्ति । तांश्चोत्तिष्ठतः सत्रिण ओषधयो वनस्पतय अनूत्तिष्ठन्ति समृद्धा जायन्ते । ततस्तान् सत्रिणः कल्याणी कीर्तिः पुण्या समृद्धिरनूत्तिष्ठति । अधुना तस्याः कीर्तेः स्वरूपं दर्शयति— अरात्सुरिति । अहो बुद्धिमन्तः सम्पन्ना इमे यजमाना इति । तदनु च तत्समृद्धचा सर्वेऽपि स्थावरजङ्गमा राध्नुवन्ति पुष्टचादिद्वारेण समृद्धा भवन्तीति ॥

इति सप्तमे चतुर्थे अष्टमोनुवाकः.

सुवर्गं वा एते लोकं यन्ति ये सत्त्रमु-
पयन्त्यभीन्धत एव दीक्षाभिरात्मा-
नꣳ श्रपयन्त उपसद्भिर्द्वाभ्यां लोमाव
द्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृद्वा-

[1]सुवर्गमिति सुवः—गम् । वै । एते । लोकम् । यन्ति । ये । सत्त्रम् । उपयन्तीत्युप—यन्ति । अभीति । इन्धते । एव । दीक्षाभिः । आत्मानम् । श्रपयन्ते । उपसद्भिरित्युपसत्—भिः । [2]द्वाभ्याम् । लोम । अवेति । द्यन्ति । द्वाभ्याम् । त्वचम् । द्वा-

---

*[1]अष्टमे संवत्सरसत्रस्य दीक्षाकाल उक्तः । अथ नवमे दीक्षा उपसदश्चोच्यन्ते । ता उभयीर्विधत्ते—सुवर्गं वा इति ॥ यत्रानुष्ठायिनः स्वर्गं गच्छन्ति....तार्थै दीक्षाभिरात्मानं स्वदेहमभीन्धत एव सर्वतो ज्वलयत्येव । उपसद्भिस्तु श्रपयन्ते स्वदेहं पचन्ति । तस्माद्दीक्षा उपसदश्चानुष्ठेया इति विध्युन्नयः । यदि द्वादशाहविकृतित्वेन प्राप्ताः तदाऽपि विकृतिलिङ्गत्वाय स्तुतये वा तदनुवादोऽस्तु ॥

[2]अथ त........र्वन् तासामुभयविधानां द्वादशत्वं प्रकटयति—द्वाभ्यामिति ॥ द्वाभ्यां दिनद्वयानुष्ठेयाभ्यां दीक्षाभ्यामुपसद्भ्यां च स्वकीयं लोम हविरर्थमवद्यन्ति अनन्तरभाविनीभ्यां द्वाभ्यां त्वच-

---

*एतस्मिन् नवमानुवाके भट्टभास्करीयभाष्यस्य क्वापि कोशे अनुपलम्भात् माधवीयमेवात्र योजितम्.

भ्यां माꣳसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्त्रमात्मानमेव दक्षिणां नीत्वा सुवर्गं लोकं यन्ति शिखामनु प्र वपन्त ऋद्ध्या अथो रघीयाꣳसस्सुवर्गं लोकमयामेति ॥ ३१ ॥

भ्याम् । असृत् । द्वाभ्याम् । माꣳसम् । द्वाभ्याम् । अस्थि । द्वाभ्याम् । मज्जानम् । आत्मदक्षिणमित्यात्म—दक्षिणम् । वै । सत्त्रम् । आत्मानम् । एव । दक्षिणाम् । नीत्वा । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । [3]शिखाम् । अनु । प्रेति । वपन्ते । ऋद्ध्यै । अथो इति । रघीयाꣳसः । सुवर्गमिति सुवः—गम् । लोकम् । अयाम । इति ॥ ३१ ॥

सुवर्गं पञ्चाशत् ॥ ९ ॥

---

मवद्यन्ति । एवं रक्तमांसास्थिमज्जसु योजनीयम् । यदेतत्सत्रं तदेतदात्मदक्षिणं वै सशरीरमेव तत्र दक्षिणा न त्वन्या गवादिरूपा अस्ति । तस्मात् स्वशरीरमेव दक्षिणारूपेण नीत्वा स्वर्गं प्राप्नुवन्ति ॥

[3]यदुक्तं सूत्रकारेण—सत्रं चेद्वपनकाले सशिखानि वपन्ते इति । तदेतद्विधत्ते—शिखामिति ॥ शिखामनुलक्ष्य प्रकर्षेण वपनं कुर्युः । तच्च मृतत्वग्रूपाणां केशानामुपगमात्समृद्ध्यै भवति । अपि च केश-

ब्रह्मवादिनो वदन्त्यतिरात्रः परमो यज्ञक्रतूनां कस्मात्तं प्रथममुप यन्तीत्येतद्वा अग्निष्टोमं प्रथममुप यन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रम-

[1]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । अतिरात्र इत्यति-रात्रः । परमः । यज्ञक्रतूनामिति यज्ञ-क्रतूनाम् । कस्मात् । तम् । प्रथमम् । उपेति । यन्ति । इति । एतत् । वै । अग्निष्टोममित्यग्नि-स्तोमम् । प्रथमम् । उपेति । यन्ति । अथ । उक्थ्यम् । अथ । षोडशिनम् । अथ । अतिरात्रमित्यति-रात्रम् । अनुपूर्वमित्यनु-पूर्वम् । एव । ए-

---

भाररहिता रवीयांसो लघुतरास्सन्तः स्वर्गं प्राप्नुवामेत्यनेनाभिप्रायेण सशिखं वपनं कुर्युः ॥

इति माधवीये वेदार्थप्रकाशे यजुस्संहितायां
सप्तमकाण्डे चतुर्थप्रपाठके नवमोनुवाकः.

---

[1]अतः परमह्नां क्लृप्तिः—ब्रह्मवादिन इत्यादि ॥ यज्ञक्रतवस्सोमयागाः । अतिरात्रस्तेषां परमः उत्तमः अन्त्या संस्था । तत् तस्मात्कारणात् तं प्रथममुपयन्तीति ब्रह्मवादिनः पर्यनुयोगं वदन्ति । अथ समाधत्ते—एतद्वा इत्यादि । यदेतदतिरात्रं प्रथमं प्राय-

नुपूर्वमेवैतद्यज्ञक्रतूनुपेत्य तानालभ्यं परिगृह्य सोममेवैतत्पिबन्त आसते ज्योतिष्टोमं प्रथममुपं यन्ति ज्योतिष्टोमो वै स्तोमानां मुखं मुखत एव स्तोमान्प्र युंञ्जते ते ॥ ३२ ॥

तत् । यज्ञक्रतूनिति यज्ञ–क्रतून् । उपेत्येत्युप–इत्यं । तान् । आलभ्येत्या–लभ्यं । परिगृह्येति परि–गृह्यं । सोमम् । एव । एतत् । पिबन्तः । आसते । ज्योतिष्टोममिति ज्योतिः–स्तोमम् । प्रथमम् । उपेति । यन्ति । ज्योतिष्टोम इति ज्योतिः–स्तोमः । वै । स्तोमानाम् । मुखम् । मुखतः । एव । स्तोमान् । प्रेति । युञ्जते । [2]ते ॥ ३२ ॥ सङ्स्तुता

---

णीयं उपयन्ति एतत्खल्वग्निष्टोमादीन् चतुरो यज्ञक्रतून् संवत्सरस्य मुखे अनुपूर्वमनुक्रमेण उपेत्य तानालभ्य पृथक्पृथगारभ्य परिगृह्य समाप्यते सोमं पिबन्तः संवत्सरायासते सत्रिणः । ज्योतिष्टोममित्यादि । तस्मात्सर्वयज्ञक्रत्वर्थं ज्योतिष्टोममेवातिरात्रं प्रथममुपयन्ति । ज्योतिष्टोमः स्तोमानां स्तोमवतां मुखम् । तस्मान्मुखत एवारभ्य सर्वान् स्तोमान् प्रयुञ्जते ॥

[2]अत्र ज्योतिर्गौरायुरिति त्रितयावृत्तिजन्मा प्रायः सकलस्संवत्सरः । तत्र केन विशेषणेन तुल्यप्रभावानां ज्योतिरेव सत्रस्य प्रथमं युज्यते न गोआयुषी इति पर्यनुयोगावसरे ज्योतिषो गुण·

सङ्ँस्तुता विराजमभि सं पद्यन्ते
द्वे चर्चावति रिच्येते एकया गौरति-

इति सं-स्तुताः । विराजमिति वि-राजम् । अ-
भि । समिति । पद्यन्ते । द्वे इति । च । ऋचौ ।

---

विशेषवत्त्वं इतरयोश्च तदभावं दर्शयितुमाह—ते संस्तुता इत्यादि ॥ ते अनन्तरोक्ता ज्योतिरादयः त्रयः संस्तुता विराजमभिसम्पद्यन्ते विराट् दशाक्षरा तत्संपत्त्या संपद्यन्ते दशकास्संपूर्णा एव भवन्ति । ज्योतिरतिरात्रस्य सप्तत्यभिकशतत्रयं स्तोत्रीया इति कृत्वा । 'नाति-रात्रे षोडशिनं गृह्णाति' इत्यस्मिन् पक्षे इदमुच्यते । ग्रहणपक्षे तु 'अथ षोडशिनं'* इति पूर्वोक्तं वेदितव्यम् । विराट्संपत्तिलक्षणं गुणविशेषं ज्योतिषः प्रतिपाद्य इदानीं गोआयुषोस्तदभावं प्रदर्शयति—द्वे चेति । द्वे ऋचौ अतिरिच्येते अतिक्रम्य वर्तेते । विराट्संपत्तिविघातोतिक्रमः । किं ज्योतिष्येव नैवं भवितुमर्हतीति न ह्येकत्र सम्भवतीति विराजमभिसम्पद्यन्ते । द्वे चर्चावतिरिच्येते इति । तस्मात्सामर्थ्यात् गोआयुषोरिति वेदितव्यम् । यद्वा—द्वे गोआयुषी ऋचावतिरिच्येते इति गोआयुषोर्व्यतिरेकः कथ्यते । तमेवव्यतिरेकं दर्शयति—एकयेत्यादि । गौरेकयर्चा अतिरिक्तः विराजं अतिक्रम्य वर्तते । आयुरेकया विराज ऊनो वर्तते । दर्शितो चैतयोरूनातिरेकावाचार्येण—गौः खलु पञ्चदशो बहिष्पवमानः त्रिवृन्त्याज्यानि सप्तदशं माध्यन्दिनं सवनं सर्वैकविंशं तृतीयसवनं सोक्थ्यमिति । एवमेकचत्वारिंशदधिकं शतद्वयं गोः स्तोत्रीयाः । अथान्यस्त्रिवृत् बहिष्पवमानं पञ्चदशाज्यानि सर्वस-

---

*सं. ७-४-१०.1

रिक्त एकयाऽऽयुरूनस्सुवर्गो वै लो-
को ज्योतिरूर्ग्विराट्थ्सुवर्गमेव तेन
लोकं यन्ति रथन्तरं दिवा भवति
रथन्तरं नक्तमित्याहुर्ब्रह्मवादिनः के-

अतीति । रिच्येते इति । एकया । गौः । अतिरि-
क्त इत्यति-रिक्तः । एकया । आयुः । ऊनः । [3]सु-
वर्ग इति सुवः-गः । वै । लोकः । ज्योतिः । ऊ-
र्क् । विराडिति वि-राट् । सुवर्गमिति-सुवः-
गम् । एव । तेन । लोकम् । यन्ति । [4]रथन्तरमि-
ति रथं-तरम् । दिवा । भवति । रथन्तरमिति र-

---

प्तदशं माध्यन्दिनं सर्वैकविंशं तृतीयसवनं सोक्थ्यमिति । एव मनयोरेकोनषष्ट्यधिकं शतद्वयमिति । तस्मादनयोरप्राधान्यं विराडभिसंपत्त्या ज्योतिष एव प्राथम्यमिति ॥

[3]पुनरपि ज्योतिरेव स्तूयते—सुवर्गो वा इत्यादि ॥ गतम् । किं बहुना सुवर्ग एव लोको ज्योतिः । तत्साधनत्वात्ताच्छब्द्यम् । ऊर्गन्नं विराट् । तां चाभिसम्पद्यते ज्योतिः तस्मात्तेन ज्योतिषा स्वर्गमेव गच्छन्ति । अन्नस्य स्वर्गपर्यायत्वात्पृथगुपादानम् ॥

[4]रथन्तरमित्यादि ॥ अतिरात्रे दिवासवनेषु * रथन्तरमेव साम भवति । नक्तमपि रथन्तरमेव प्रवर्तते । त्रिवृद्रथन्तरसन्धि-

---

*दिवावसाने.

न तदजामीति सौभरं तृतीयसवने ब्रह्मसामं बृहत्तन्मध्यतो दधाति विधृत्यै तेनाजामि ॥ ३३ ॥

थं-तरम् । नक्तम् । इति । आहुः । ब्रह्मवादिन इति ब्रह्म-वादिनः । केन । तत् । अजामि । इति । सौभरम् । तृतीयसवन इति तृतीय-सवने । ब्रह्मसाममिति ब्रह्म-सामम् । बृहत् । तत् । मध्यतः । दधाति । विधृत्या इति वि-धृत्यै । तेन । अजामि ॥ ३३ ॥

त एकान्नपंञ्चाशच्चं ॥ १० ॥

---

रिति च सन्ध्यभिप्रायम् । एवमस्य रथन्तरैकसामतां अपश्यन्तो ब्रह्मवादिन आहुः—केन तदजामित्वं आलस्याभावः केन तत्र सम्पद्यते इति । तत्रोत्तरं ब्रूयात्—सौभरमित्यादि । तृतीयसवने उक्थ्यपर्याये सौभरो नाम ब्रह्मणस्सामास्ति । 'अनसन्तान्नपुंसकात्' इति अच् समासान्तः । बृहत् बृहता गेयः तन्मध्यतः मध्यमे उक्थ्ये विदधाति विधृत्यै विधारणार्थं उक्थ्यानाम् । तेनेत्यादि । तेन इत्थं क्रियमाणेन अजामि अजामित्वमपि सम्पद्यते इति ॥

इति सप्तमे चतुर्थे दशमोनुवाकः.

---

ज्योतिष्टोमं प्रथममुपं यन्त्यस्मि-
न्नेव तेनं लोके प्रतिं तिष्ठन्ति गो-
ष्टोमं द्वितीयमुपं यन्त्यन्तरिंक्ष एव
तेन प्रतिं तिष्ठन्त्यायुंष्टोमं तृतीयमु-
पं यन्त्यमुष्मिन्नेव तेनं लोके प्रतिं
तिष्ठन्तीयं वाव ज्योतिंरन्तरिंक्षं
गौरसावायुर्यदेतान्थ्स्तोमांनुपयन्त्ये-

[1]ज्योतिष्टोममिति ज्योतिः–स्तोमम् । प्रथमम् । उपेतिं । यन्ति । अस्मिन्न् । एव । तेनं । लोके । प्रतीतिं । तिष्ठन्ति । गोष्टोममिति गो–स्तोमम् । द्वितीयम् । उपेतिं । यन्ति । अन्तरिंक्षे । एव । तेनं । प्रतीतिं । तिष्ठन्ति । आयुंष्टोममित्यायुः–स्तोमम् । तृतीयम् । उपेतिं । यन्ति । अमुष्मिन्न् । एव । तेनं । लोके । प्रतीतिं । तिष्ठन्ति । [2]इयम् । वाव । ज्योतिः । अन्तरिंक्षम् । गौः । असौ । आयुः ।

---

[1]सम्प्रति अभिप्लवषडहो विधीयते—ज्योतिष्टोममित्यादि ॥ गतम् । अत्र ज्योतिष्टोम अग्निष्टोमो वेदितव्यः । अग्निष्टोमावभित इति । गवायुश्शब्दयोः स्तोमविशेषस्वभाववृत्तित्वात् बहुव्रीहिद्वयम् ॥

[2]इयं वावेत्यादि ॥ प्राथम्यादिना ताच्छब्द्यं स्तुतिर्वा तद्गुणप्रापणार्था । यदेतानित्यादि । विशिष्टस्तोमकानेतान् क्रतूनित्यर्थः ।

ष्वेव तल्लोकेषु सत्त्रिणः प्रति तिष्ठ-
न्तो यन्ति ते सङ्स्तुता विराजम्॥
३४ ॥ अभि सं पद्यन्ते द्वे चर्चाव-
तिं रिच्येते एकया गौरतिरिक्त ए-
कयाऽऽयुरूनस्सुवर्गो वै लोको ज्यो-

यत् । एतान् । स्तोमान् । उपयन्तीत्युप—यन्ति । एषु । एव । तत् । लोकेषु । सत्त्रिणः । प्रतितिष्ठन्त इति प्रति—तिष्ठन्तः । यन्ति । ते । सङ्स्तुता इति सं—स्तुताः । विराजमिति वि—राजम् ॥३४॥ अभि । सामिति । पद्यन्ते । द्वे इति । च । ऋचौ । अतीति । रिच्येते इति । एकया । गौः । अतिरिक्त इत्यति—रिक्तः । एकया । आयुः । ऊनः । सु-

एष्विति । पृथिव्यादिषु । ते संस्तुता इत्यादि । अग्निष्टोमो ज्योतिश्च गौश्चायुश्चेत्येते त्रयोपि सह स्तुता विराजमभिसम्पद्यन्ते। नवाधिकं षट्छतं स्तोत्रीया इति । न ह्येषामन्यतमः कश्चित्त्रिकस्य प्रथमोस्तीत्याशङ्क्य ज्योतिष एव गुणवत्त्वात् प्राथम्यमितरयोश्च तदभावात् तदभावं च दर्शयति—द्वे इत्यादि । व्याख्यातम् ।* ज्योतिषश्च स्वर्गस्थानीयत्वात् विराडभिसम्पत्त्या च प्राथम्यमिति नवतिशतस्तोत्रीयेग्निष्टोम इत्युक्तम् । अत्र समुदायस्यापि विराट्सम्पत्त्या तस्य प्राधान्यमिति 'ऊर्जमेवावरुन्धते' इत्युक्तम् । ततस्ते यजमानाः प्रथममेव विराड्भावेन क्षुधा आर्तिं नार्छन्ति न गच्छ-

*सं. ७-४-१०.[2]

तिरूर्ग्विराडूर्जमेवावं रुन्धते ते न क्षु-
धाऽऽर्तिमार्छन्त्यक्षोधुका भवन्ति क्षु-
त्संबाधा इव हि सत्त्रिणोऽग्निष्टोमा-
वभितः प्रधी तावुक्थ्या मध्ये नभ्यं

वर्ग इति सुवः—गः । वै । लोकः । ज्योतिः । ऊ-र्क् । विराडिति वि—राट् । ऊर्जम् । एव । अवेति । रुन्धते । ते । न । क्षुधा । आर्तिम् । एति । ऋच्छन्ति । अक्षोधुकाः । भवन्ति । क्षुत्सम्बाधा इति क्षुत्—सम्बाधाः । इव । हि । सत्त्रिणः । [3]अग्निष्टोमावित्यग्नि—स्तोमौ । अभितः । प्रधी इति प्र—धी । तौ । उक्थ्याः । मध्ये । नभ्यम् । तत् । तत् ।

---

न्ति । 'गोपोषं पुष्णाति' इतिवत्सामान्यविशेषभावादपौनरुक्त्यम् । किञ्च—अक्षोधुकाः अक्षुच्छीला एव भवन्ति सत्रिणः । छान्दस उकञ् । कस्मादेवमुच्यत इत्याह—क्षुत्संबाधा इत्यादि । क्षुधा संबाध्यन्ते इति क्षुत्संबाधाः । दासीभारादिः । यद्वा—क्षुन्निमित्तं संबाधा एषामिति बहुव्रीहिः । एवंस्वभावा एव सत्रिणो भवन्ति ॥

[3]इदानीं च क्रतुत्वेन षडहं रूपयति—अग्निष्टोमावित्यादि ॥ अग्निष्टोमौ द्वौ अभितष्षडहस्यास्य आद्यावन्ते च भवतः । प्रधी ताविति । प्रान्ते धीयेते इति प्रधी प्रकर्षेण धार्येते

तत्तदेतत्परियद्देवचक्रं यदेतेन ॥३५॥
षडहेन यन्ति देवचक्रमेव समारोह-
न्त्यरिष्ट्यै ते स्वस्ति समश्नुवते ष-
डहेन यन्ति षड्वा ऋतव ऋतुष्वेव

एतत् । परियदिति परि-यत् । देवचक्रमिति देव-चक्रम् । यत् । एतेन ॥ ३५ ॥ षडहेनेति षट्-अहेन । यन्ति । देवचक्रमिति देव-चक्रम् । एव । समारोहन्तीति सं-आरोहन्ति । अरिष्ट्यै । ते ।

---

चक्रमाभ्यामिति । 'उपसर्गे घोः किः' । तौ च पर्यन्तफलके याभ्यां विष्कम्भार्थप्रमाणाभ्यां सर्व चक्रं परितो व्याप्यत इति । असमर्थः—यावेतावग्निष्टोमावभितः स्थितौ तावस्य चक्रस्य प्रधिस्थानीयौ वर्तेते इति । उक्थ्या मध्य इत्यादि । ये गोआयुषी गाआयुषी इति चत्वारः उक्थ्याः ते अस्य चक्रस्य मध्ये भवन्ति । कथं तेषामवस्थानमित्याह—नभ्यं तदिति । चक्रस्य मध्ये नभ्यवत् परिमण्डलाकारेण वर्तते । नाभये हितं नभ्यम् । 'नाभिनभं च' इति यत्प्रत्ययः, नभभावश्च, 'यतो नावः' इत्याद्युदात्तत्वम् । तदेतत्परियत् परितो गच्छेत् देवचक्रं देवाः क्रियन्ते इज्यन्तेऽस्मिन्निति देवचक्रं षडहात्मकम् । यदेतेन षडहेन यन्ति । देवचक्रमेव देवसेनामेव समारोहन्ति सङ्गता आरोहन्ति । तच्चारिष्ट्यै अहिंसायै च भवति । ते हि देवचक्रं समारुह्य वर्तमानाः स्वस्ति अविनाशेन अभिमतफलमश्नुवते ॥

प्रति तिष्ठन्त्युभयतो ज्योतिषा य-
न्त्युभयत एव सुवर्गे लोके प्रतिति-
ष्ठन्तो यन्ति द्वौ षडहौ भवतस्तानि
द्वादशाहानि सं पद्यन्ते द्वादशो वै
पुरुषो द्वे सक्थ्यौ द्वौ बाहू आत्मा
च शिरश्च चत्वार्यङ्गानि स्तनौ द्वा-

स्वस्ति । सामिति । अश्नुवते । [4]षडहेनेति षट्—अहेन ।
यन्ति । षट् । वै । ऋतवः । ऋतुषु । एव । प्रतीति । तिष्ठन्ति । उभयतोज्योतिषेत्युभयतः—ज्योतिषा । यन्ति । उभयतः । एव । सुवर्ग इति सुवः—गे । लोके । प्रतितिष्ठन्त इति प्रति—तिष्ठन्तः । यन्ति । द्वौ । षडहाविति षट्—अहौ । भवतः । तानि । द्वादश । अहानि । सामिति । पद्यन्ते । द्वाद-

---

[4]एवं षडहं संपाद्य संप्रति मास* संपादनार्थमाह—षडहेनेत्यादि ॥ मासावयवास्तूयन्ते—षड्वा इत्यादि । गतम् । उभयतोज्योतिषा आदावन्ते च ज्योतिष्टोमाग्निष्टोमवता । द्वाविति† । द्वादशत्वयोगाद्द्वादशात्मकं पुरुषमभिपर्यावर्तन्ते । पुरुषमेव लक्ष्यमाणं पुनःपुनरभ्यावर्तन्ते । द्वे सक्थ्यौ पादमूले । 'ई च द्विवचने' इतीकारः । द्वौ बाहू हस्तमूले आत्मा कुक्षिः शिरो ग्रीवाभ्यः परं चत्वार्यङ्गानि

---

*साम. †द्वाविंशति.

दुशौ ॥ ३६ ॥ तत्पुरुषमनु पर्यावर्तन्ते त्रयंष्षडहा भंवन्ति तान्यष्टादशाहांनि सं पंद्यन्ते नवान्यानि नवान्यानि नव वै पुरुषे प्राणास्तत्प्राणाननुं पर्यावर्तन्ते चत्वारंष्षडहा भंवन्ति तानि चतुर्विंशतिरहांनि

शः । वै । पुरुषः । द्वे इति । सक्थ्यौ । द्वौ । बाहू इति । आत्मा । च । शिरः । च । चत्वारि । अङ्गानि । स्तनौ । द्वादशौ ॥ ३६ ॥ तत् । पुरुषम् । अन्विति । पर्यावर्तन्त इति परि–आवर्तन्ते । त्रयः । षडहा इति षट्–अहाः । भवन्ति । तानि । अष्टादशेत्यष्टा–दश । अहानि । समिति । पद्यन्ते । नव । अन्यानि । नव । अन्यानि । नव । वै । पुरु-

हस्तौ पादौ च स्तनौ स्तनाधारौ वा वक्षोग्रीवाभागौ द्वादशौ एकादशौ द्वादशाहश्च । सत्सु हि द्वादशसु पूर्वेऽपि द्वादशांशाः द्वादशैरवयवैः तद्वान् पुरुषो द्वादशः । डप्रत्ययान्तः मत्त्वर्थीयो लुप्यते । परिमाणप्रत्ययो वा । त्रय इति । नवत्वान्वयात् नवात्मकं प्राणमभिपर्यावर्तन्ते । ननु त्रयष्षडहाः अष्टादशाहा भवन्ति कथं नवेत्याह—नवान्यानीति । नवान्यानि त्रीणि नव तावत् भवन्ति । सर्वथा नवत्ववचनमनुवर्तत इति । नव वा इत्यादि ।

सं पद्यन्ते चतुर्विंशतिरर्धमासा-
स्संवथ्सरस्तथ्संवथ्सरमनु पर्यावर्त-
न्तेऽप्रतिष्ठितस्संवथ्सर इति खलु

वै । प्राणा इति प्र—अनाः । तत् । प्राणानिति प्र—अनान् । अन्विति । पर्यावर्तन्त इति परि—आवर्तन्ते । चत्वारः । षडहा इति षट्—अहाः । भवन्ति । तानि । चतुर्विंशतिरिति चतुः—विंशतिः । अहानि । संमिति । पद्यन्ते । चतुर्विंशतिरिति चतुः—विंशतिः । अर्धमासा इत्यर्ध—मासाः । संवत्सर इति सं—वत्सरः । तत् । संवत्सरमिति सं—वत्सरम् । अन्विति । पर्यावर्तन्त इति परि—आवर्तन्ते । [5]अप्रतिष्ठित इत्यप्रति—स्थितः । संवत्सर

सप्त शीर्षण्याः, द्वाववाञ्चाविति । चत्वार इति । चत्वारः चतुर्विंशतिसङ्ख्यान्वयात् । नव चतुर्विंशत्यर्धमासात्मकं संवत्सरमभिपर्यावर्तन्ते । एवमेतानि चतुर्विंशतिरहानि पृष्ठ्यषडहो वक्ष्यते । मासिमासि पृष्ठान्युपयन्तीति । तेन मासः प्रतिपादितो भवति ॥

[5]अधुना मासान्तरसंपादनार्थमाह—अप्रतिष्ठित इत्यादि ॥ एवं मासमात्रमनेन ब्राह्मणेन प्रतिपादितमिति मत्वा आहुरेकेऽप्रतिष्ठितस्संवत्सर इति । हेतुं चाहुर्वर्षीयान् प्रतिष्ठाया इति । प्रतितिष्ठति अभ्रंशेन तिष्ठत्यस्यामिति प्रतिष्ठा आधारः । 'आत-

वा आहुर्वर्षीयान्प्रतिष्ठाया इत्ये-
तावद्वै संवथ्सरस्य ब्राह्मणं याव-

इति सं-वत्सरः । इति । खलु । वै । आहुः । व-
र्षीयान् । प्रतिष्ठाया इति प्रति-स्थायाः । इति ।
6 एतावत् । वै । संवत्सरस्येति सं-वत्सरस्य । ब्रा-
ह्मणम् । यावत् । मासः । मासिमासीति मासि-

श्चोपसर्गे' इत्यधिकरणे अङ्प्रत्ययः । एकोयं मासः प्रतिष्ठा प्रतिपादितः । इतश्च वर्षीयान् वृद्धतरः संवत्सरस्स्यादप्रतिष्ठितः सुखेन स्थातुं न शक्नोति । प्रियस्थिरादिना वर्षा देशः । यद्वा वर्षीयान् खलु प्रतिष्ठायै प्रतिष्ठार्थं प्रभवति । न चायं प्रथमो मासः संवत्सराद्वर्षीयान् । न चास्मादन्यो वर्षीयानस्ति यः प्रतिष्ठार्थं स्यात् । तस्मादप्रातिष्ठितः संवत्सर इति । अस्मिन्पक्षे भावे अङ्प्रत्ययः । चतुर्थ्यर्थे षष्ठी ॥

[6]अत्रोत्तरमेतावद्वा इत्यादिना ब्रूमः । मासमेकं प्रतिपाद्याय-मेको मासः संवत्सर इति तु एतावत्संवत्सरस्य द्वादशानां मासानां ब्राह्मणं क्रियते यावन्मासः यावन्मासमात्रस्य ब्राह्मणं मन्यसे । 'ज्योतिष्टोमं प्रथममुपयन्ति' इत्यारभ्य 'चतुर्विंशतिरर्धमासास्संव-त्सरः' इत्यन्तम् । पद्मादिना मासशब्दस्य मासभावः । 'ऊ-ङिदं' इति षष्ठ्या उदात्तत्वम् । अयमेव मासोभ्यासेन संव-त्सरं पूरयिष्यतीति ब्राह्मणस्याभिप्रायः । तस्मान्मासि मासि प्रतितिष्ठ-न्तः प्रतिष्ठितसंवत्सरा यन्ति । तस्मान्नितरां प्रतिष्ठितः संवत्सर इति

न्मासो मासिमास्येव प्रतितिष्ठन्तो
यन्ति ॥ ३७ ॥
मेषस्त्वा पचतैरवतु लोहितग्रीव-
श्छागैश्शल्मलिर्वृद्ध्या पर्णो ब्रह्म-

मासि । एव । प्रतितिष्ठन्त इति प्रति-तिष्ठन्तः । यन्ति ॥ ३७ ॥

विराजमेतेन द्वादशावेतावद्वा अष्टौ च ॥११॥

[1]मेषः । त्वा । पचतैः । अवतु । लोहितग्रीव इति लोहित-ग्रीवः । छागैः । शल्मलिः । वृद्ध्या । पर्णः । ब्रह्मणा । प्लक्षः । मेधेन । न्यग्रोधः । च-

---

भावः । पूर्ववद्विभक्त्युदात्तत्वम् । 'अनुदात्तं च' इत्याम्रेडितस्यानुदात्तत्वम् ॥

इति सप्तमे चतुर्थे एकादशोनुवाकः.

---

[1]अतः परमश्वमेधमन्त्राः । तत्र अपाव्यानि जुहोति—मेषस्त्वेति ॥ रात्रिहोमेष्वग्निपर्यग्निकरणे चाश्वस्य । हे अश्व पचतैः पचनीयैः अन्नैस्सह मेषः पचनीयानां मुख्यस्त्वामवतु अनुप्रविशतु । अवतिरनेकार्थः । पचतेरौणादिकोतच् । लोहितग्रीवोऽजानां मुख्यः छागैस्सह त्वामवत्वित्येव । अत्र सहाभिगमनेऽवतिर्वर्तते । यथोक्तम्—'पर्यग्निकृतानारण्यानुत्सृजन्ति'* 'वाडवे पुरुषवाजः पु-

---

*ब्रा. ३-९-३.

णा प्लक्षो मेधेन न्यग्रोधश्चमसैरुदु-
म्बर ऊर्जा गायत्री छन्दोभिस्त्रिवृ-
थ्स्तोमैरवन्तीस्स्थावन्तीस्त्वाऽवन्तु

मसैः । उदुम्बरः । ऊर्जा । गायत्री । छन्दोभिरिति छन्दः—भिः । त्रिवृदिति त्रि—वृत् । स्तोमैः । अवन्तीः । स्थ । अवन्तीः । त्वा । अवन्तु । प्रियम् । त्वा । प्रियाणाम् । वर्षिष्ठम् । आप्यानाम् ।

---

रो नीयते अश्वस्य ' इति । शल्मलिः पादपो वर्षिष्ठः वृद्ध्या सह त्वामवतु अनुप्रविश्य वर्धयतु । पर्णः पलाशः प्रशस्तानां प्रथमः स ब्रह्मणा मन्त्रैर्ब्राह्मणैर्वा त्वामवतु रक्षतु । जातावेकवचनम् । प्लक्षो यज्ञियानां मुख्यः स मेधेन यज्ञेन यज्ञबलेन वा त्वामवतु प्राप्नोतु । न्यग्रोधश्चमसैः पात्रैः सह त्वामवतु धारयतु । यथोक्तम्—'नैयग्रोधश्चमसः' इति । उदुम्बरः ऊर्जा रसानां मुख्यः ऊर्जा सह त्वामवतु रसेन वर्धयतु । गायत्री छन्दसामाद्या छन्दोभिरुष्णिगादिभिः सह त्वामवतु रक्षतु । त्रिवृत्स्तोमानां प्रथमः त्वां स्तोमैः पञ्चदशादिभिः सह अवतु । अवन्तीस्स्थेति । पङ्क्तिप्रकारश्चतुष्पदः एकादशाक्षरः प्रथमः द्वितीयतृतीयौ षडक्षरौ षोडशाक्षरश्चतुर्थः । अवन्तीः अवन्त्यः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । या अन्या अपि प्रजा अवन्त्यो भवन्ति आप ओषधयो वा । यद्वा—पूर्वोक्तानां मेधादीनां अवतां सम्बन्धिन्यो याः पत्न्यो भवन्ति ताः सर्वाः त्वमेवासि* । सर्व-

---

*त्वामेवाहन्ति.

प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां निधीनां त्वा निधिपतिꣳ हवामहे वसो मम ॥ ३८ ॥

निधीनामिति नि—धीनाम् । त्वा । निधिपतिमिति निधि—पतिम् । हवामहे । वसो इति । मम ॥ ३८ ॥

मेषष्षड्विꣳशत् ॥ १२ ॥

---

था पुरुषव्यत्ययात् वचनव्यत्ययाद्वा न मुच्यामहे । ता अवन्त्यः त्वामवन्तु । तं त्वा प्रियाणां प्रियं आप्यानां वृद्धानामपि वर्षिष्ठं वृद्धतमम् । पूर्ववद्वर्षादेशः । आङ्पूर्वाद्व्यायतेः छान्दसो डः, अप्छब्दाद्वा ण्यः । वृषादिर्द्रष्टव्यः । अनवधारणादनवग्रहः । निधीनामपि निधिपतिं महानिधिं महान्तं निधिम् । यद्वा—सर्वेषां निधीनां संबन्धिनं निधिपतिं स्वामिनम् । अथवा—निधयो निधातारस्तेषामपि निधिपतिं अतिशयेन निधातारम् । सर्वथा 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । ईदृशं त्वां हवामहे जुहुमः । व्यत्ययेन शप् आत्मनेपदं च । यद्वा—होतुमाह्वयामः । 'बहुलं छन्दसि' इति संप्रसारणम् । हे वसो धनस्थानीय मम । यद्वा—मम वासयितः पुण्येषु लोकेषु । 'परमपि छन्दसि' इति परस्य षष्ठ्यन्तस्य पूर्वामन्त्रितानुप्रवेशात् षष्ठ्यन्तामन्त्रितसमुदायो निहन्यते ॥

इति सप्तमे चतुर्थे द्वादशोनुवाकः.

---

कूप्याभ्यस्स्वाहा कूल्याभ्यस्स्वाहा
विकर्याभ्यस्स्वाहाऽवट्याभ्यस्स्वा -
हा खन्याभ्यस्स्वाहा ह्रद्याभ्यस्स्वा-
हा सूद्याभ्यस्स्वाहा सरस्याभ्यस्स्वा-
हा वैशन्तीभ्यस्स्वाहा पल्वल्याभ्य-

[1]कूप्याभ्यः । स्वाहा । कूल्याभ्यः । स्वाहा । विकर्याभ्य इति वि—कर्याभ्यः । स्वाहा । अवट्याभ्यः । स्वाहा । खन्याभ्यः । स्वाहा । ह्रद्याभ्यः । स्वाहा । सूद्याभ्यः । स्वाहा । सरस्याभ्यः । स्वाहा । वैशन्तीभ्यः । स्वाहा । पल्वल्याभ्यः । स्वाहा । वर्ष्याभ्यः । स्वाहा । अवर्ष्याभ्यः । स्वाहा ।

---

[1]पुनरपि तत्रैव रात्रिहोमेष्वपां होमाः—कूप्याभ्य इत्यादि ॥ कूपाः प्रसिद्धाः । सर्वत्र 'भवे छन्दसि' इति यत् । द्व्यचां 'यतोऽनावः' इत्याद्युदात्तत्वम् । अन्यत्र 'तित्स्वरितम्' इति स्वरितत्वम् । कुल्यासु भवाः कूल्याः छान्दसं दीर्घत्वम् । यद्वा—कूलसमीपभवाः क्षुद्रकूपाः कूल्याः । विकर्या भूविवराः । किरतेः ऋदोरप् । विकृतावादेशः करोतेः छान्दसो दीर्घः । अवटा गर्ताः । खन्याः खननेन निर्वृत्ताः तटाकादयः । ह्रदाः अगाधा जलाशयाः । सूद्याः कदाचिदप्यशोषितपङ्काः । सुष्ठून्नयनीयाः सूद्या इति केचित् काष्ठादियन्त्रप्रभवा उच्यन्ते । सरांसि स्वयमुत्पन्ना जलाशयाः । आर्तास्वार्तासु स्फुटं पुनःपुनर्विशन्ति उत्पद्यन्ते एष्वाप

स्स्वाहा वर्ष्याभ्यस्स्वाहाऽवर्ष्याभ्य-
स्स्वाहा ह्रादुनीभ्यस्स्वाहा पृष्वाभ्य-
स्स्वाहा स्यन्दमानाभ्यस्स्वाहा स्था-
वराभ्यस्स्वाहा नादेयीभ्यस्स्वाहा
सैन्धवीभ्यस्स्वाहा समुद्रियाभ्य-
स्स्वाहा सर्वाभ्यस्स्वाहा ॥ ३१ ॥

ह्रादुनीभ्य इति ह्रादुनि—भ्यः । स्वाहा । पृष्वाभ्यः । स्वाहा । स्यन्दमानाभ्यः । स्वाहा । स्थावराभ्यः । स्वाहा । नादेयीभ्यः । स्वाहा । सैन्धवीभ्यः । स्वाहा । समुद्रियाभ्यः । स्वाहा । सर्वाभ्यः । स्वाहा ॥ ३१ ॥

कूप्याभ्यश्चत्वारिंशत् ॥ १३ ॥

---

इति वेशन्ताः । विशतेरौणादिकोऽतच्च । वेशन्तहिमवद्भ्यामणि आद्युदात्तभाव [अन्तोदात्तभाव] इति केचित् । पल्वलानि । वन्या जलाशयाः । वर्ष्याः वर्षे भवाः । वर्षे न भवन्तीत्यवर्ष्याः पीडनप्रभवाः । 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । ह्रादुन्यः ह्रादुशब्दवत्यः । ह्रादेरौणादिको निप्रत्ययः, छान्दसं दीर्घत्वम् । पृष्वाः अवश्यायजलानि संचितानीत्यन्ये । स्यन्दमानाः वहन्त्यो यत्र क्वापि । स्थावराभ्यः तिष्ठन्तीभ्यः यत्र क्वापि । 'स्थेशभास' इति वरच् । नादेय्यः नद्यां भवाः । 'नद्यादिभ्यो ढक्' सैन्धव्यः महानदीप्रभवाः पुन्नद्यासिन्धव इति केचित् । औत्सर्गिकेण उदात्तनि-

अद्भ्यस्स्वाहा वहन्तीभ्यस्स्वाहा प-
रिवहन्तीभ्यस्स्वाहा समन्तं वहन्ती-
भ्यस्स्वाहा शीघ्रं वहन्तीभ्यस्स्वाहा
शीभं वहन्तीभ्यस्स्वाहोग्रं वहन्ती-
भ्यस्स्वाहा भीमं वहन्तीभ्यस्स्वा-

[1]अद्भ्य इत्यत्–भ्यः । स्वाहा । वहन्तीभ्यः । स्वाहा । परिवहन्तीभ्य इति परि–वहन्तीभ्यः । स्वाहा । समन्तमिति सं–अन्तम् । वहन्तीभ्यः । स्वाहा । शीघ्रम् । वहन्तीभ्यः । स्वाहा । शीभम् । वहन्तीभ्यः । स्वाहा । उग्रम् । वहन्तीभ्यः । स्वा-

---

वृत्तिस्वरेण ङीप उदात्तत्वम् । समुद्रियाभ्यः । 'समुद्राभ्राद्घः' सर्वाभ्य इत्यनुक्तपरिग्रहार्थम् ॥

इति सप्तमे चतुर्थे त्रयोदशोनुवाकः.

---

[1]पुनरपि तत्रैवापां होमाः—अद्भ्यस्स्वाहेत्यादि ॥ अद्भ्यः सामान्याभिधानं विशेषान्वक्ष्यामीति । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । वहन्त्यः । परिवहन्त्यः मण्डलं भ्रमयन्त्यः । कूलं भित्वाऽतिनिष्पतन्त्य इत्यन्ये । समन्तं वहन्त्यः कूले अतिलङ्घ्य सर्वतो गच्छन्त्यः । शीघ्रं द्रुतं यथा कूले निपतिते भवतः तथा । शीभं शोभनं कूलाबाधेन । उग्रं उद्धूर्णं मेघपटलसंछन्नम् । भीमं

हाऽम्भोभ्यस्स्वाहा नभोभ्यस्स्वाहा
महोभ्यस्स्वाहा सर्वस्मै स्वाहा ॥
यो अर्वन्तं जिघांसति तमभ्यं-

हा । भमिम् । वहन्तीभ्यः । स्वाहा । अम्भोभ्य
इत्यम्भः—भ्यः । स्वाहा । नभोभ्य इति नभः—
भ्यः । स्वाहा । महोभ्य इति महः—भ्यः । स्वाहा ।
सर्वस्मै । स्वाहा ॥ ४० ॥

अत्र एकान्नत्रिंशत् ॥ १४ ॥

[1]यः । अर्वन्तम् । जिघांसति । तम् । अ-

---

भीतिहेतुजननं कृष्यमाणकूलपादपं महासत्त्वम् । अम्भांसि अस्मिन् लोके भवाः आपः 'अयं वै लोकोम्भांसि'* इति ब्राह्मणम् । नभांसि आन्तरिक्ष्याः । महांसि अमुष्मिन्लोके भवाः । सर्वस्मै जलमात्राय ॥

इति सप्तमे चतुर्थे चतुर्दशोनुवाकः.

---

[1]श्वानं हन्यमानमनुन्त्रयते—यो अर्वन्तमिति द्विपदया गायत्र्या ॥ यः श्वा अर्वन्तमश्वं जिघांसति हन्तुमिच्छति तं वरुणः अभ्यमीति आभिमुख्येन नाशयतु । अमतेर्लेटि शपो लुकि 'तुरुस्तु शम्यमः' इतीडागमः ॥

---

*ब्रा ३-८-१८.

मीति वरुणः । परो मर्तः परश्श्वा ।
अहं च त्वं च वृत्रहन्त्सं बभूव स-
निभ्य आ । अरातीवा चिदद्रिवोऽनु

भीति । अमीति । वरुणः । [2]परः । मर्तः । परः ।
श्वा । [3]अहम् । च । त्वम् । च । वृत्रहन्निति वृत्र-
हन् । सामिति । बभूव । सनिभ्य इति सनि-
भ्यः । आ । अरातीवा । चित् । अद्रिव इत्यद्रि-

---

[2]तं हतं अश्वस्याधस्पदमुपास्यति—पर इत्येकपदया गायत्र्या ॥ योऽश्वस्य हन्ता मर्तः मर्त्यः स परोस्तु परस्तादस्तु श्वा च परस्तादस्तु इतोन्यं हिनस्तु । परशब्दात्परस्यास्तातेश्छान्दसोसिप्रत्ययः । तेनान्तोदात्तत्वम् ॥

[3]ब्रह्मा यजमानस्य हस्तं गृह्णाति—अहं चेति पञ्चपदया पङ्क्त्या ॥ हे वृत्रहन्! पाप्मनां हन्तः यजमानः अहं च त्वं च संबभूव, वचनव्यत्ययः संबभूविव । छान्दसो लिट् । सम्भभूव वा सर्वार्थेषु संसृज्य वर्तावहै सनिभ्यः सन्यर्थं सर्वे लाभाः संपद्यन्तामिति । आकारो मर्यादायाम् । हे अद्रिवः! अद्रिमान् वज्रवानिन्द्रो हे तदात्मन्! । ‘ छन्दसीरः ’ इति मतुपो वत्वं ‘ मतुवसोः ’ इति रुत्वम् । हे शूर! नौ त्वां च मां च अरातीवा चित् अदानवन्तावपि । अरातिरदानम् । ततः ‘ छन्दसीवनिपौ ’ इति मत्वर्थीयो वनिप्, ‘ अन्येषामपि दृश्यते ’ इति दीर्घत्वं, ततः परस्य द्विवचनस्य डाजादेशः । ईदृशावप्यावां इन्द्रस्य

नौ शूर मꣳसतै भद्रा इन्द्रस्य रात-
यः । अभि क्रत्वेन्द्र भूरध ज्मन्न ते
विव्यङ्महिमानꣳ रजाꣳसि । स्वेना
हि वृत्रꣳ शवसा जघन्थ न शत्रुर-
न्तं विविदद्युधा ते ॥ ४१ ॥

वः । अन्विति । नौ । शूर । मꣳसतै । भद्राः । इन्द्रस्य । रातयः । [4]अभीति । क्रत्वा । इन्द्र । भूः । अध । ज्मन् । न । ते । विव्यक् । महिमानम् । रजाꣳसि । स्वेन । हि । वृत्रम् । शवसा । जघन्थ । न । शत्रुः । अन्तम् । विविदत् । युधा । ते ॥ ४१ ॥

विविदद्द्वे च ॥ १५ ॥

---

भद्रा गम्भीरा रातयः दानानि अनुमंसतै अनुमन्यतां अस्मद्विषये । यद्यप्यावां अल्पहविर्मात्रप्रदानेन उपक्षीणौ तथाऽप्यावाभ्यां प्रभूतानि धनानि इन्द्रो ददात्विति भावः ॥

[4]अभि क्रत्वेत्यादि ॥ स्वेना हीति । सांहितिकं दीर्घत्वं छान्दसम् । शत्रुः ते तव अन्तं विनाशं युधा युद्धेनापि न विविदत् न वेत्तु न लभतां वा । वेत्तेर्विन्दतेर्वा लेटि शपः 'लेटोडाटौ' इत्यडागमः 'नाभ्यस्तस्याचि' इति गुणाभावः ॥

इति सप्तमे चतुर्थे पञ्चदशोनुवाकः.

नमो राज्ञे नमो वरुणाय नमोश्वाय नमः प्रजापतये नमोधिपतयेऽधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासं मां धेहि मयि धेह्युपाकृताय स्वाहाऽऽलब्धाय स्वाहा हुताय स्वाहा ॥ ४२ ॥

[1]नमः । राज्ञे । नमः । वरुणाय । नमः । अश्वाय । नमः । प्रजापतय इति प्रजा-पतये । नमः । अधिपतय इत्यधि-पतये । अधिपतिरित्यधि-पतिः । असि । अधिपतिमित्यधि-पतिम् । मा । कुरु । अधिपतिरित्यधि-पतिः । अहम् । प्रजानामिति प्र-जानाम् । भूयासम् । माम् । धेहि । मयि । धेहि । [2]उपाकृतायेत्युप-आकृताय । स्वाहा । आलब्धायेत्या-लब्धाय । स्वाहा । हुताय । स्वाहा ॥ ४२

नम एकान्नत्रिंशत् ॥ १६ ॥

[1]रात्रिहोमेषु यव्यानि जुहोति—नमो राज्ञ इत्यादि ॥ सर्वं निगदसिद्धम् । राजा सोमः । मां धेहि धारय । यत्रावस्थापितेन मया भूयोपि किञ्चित्कर्तव्यमस्ति तत्र मां स्थापय यद्दातव्यम् ॥

[2]उपाकृताय इत्यादौ लिङ्गादेव सिद्धो विनियोगः । आद्ययोः 'गतिरनन्तरः' इति प्रकृतिस्वरत्वम् ॥

इति सप्तमे चतुर्थे षोडशोनुवाकः.

मयोभूर्वातो अभि वातूस्रा ऊर्ज-
स्वतीरोषधीरा रिशन्ताम् । पीवस्व-
तीर्जीवधन्याः पिबन्त्ववसाय पद्वते

[1]मयोभूरिति मयः-भूः । वातः । अभीति । वातु । उस्राः । ऊर्जस्वतीः । ओषधीः । एति । रिशन्ताम् । पीवस्वतीः । जीवधन्या इति जीव-धन्याः । पिबन्तु । अवसाय । पद्वत इति पत्-

[1]तत्रैव दश गव्यानि जुहोति—मयोभूरित्यादिना ॥ त्रैष्टुभः सर्वोनुवाकः । इह धृतिरित्यादि यजुः । 'महीमू षु' * 'सुत्रामाणं'* इति द्वयोस्त्रिष्टुभोः प्रतीकग्रहणम् । तत्र प्रथमं—मयोभूरित्यादि। हे रुद्र त्वत्प्रसादान्मयोभूः सुखस्य भावयिता । 'बहुलमन्यत्रापि' इति णिलुक् । ईदृशो वातः उस्राः गाः अभिवातु आभिमुख्येन सेवताम् । ऊर्जस्वतीः रसवतीः ओषधीस्तृणादीनि आरिशन्तां आस्वादयन्तु । रिशतिरभ्यवहारे । किं च—पीवस्वतीः पीवस्वत्यः स्थौल्यवत्यः अकृशाः । पीव स्थौल्ये, असुनि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । जीवधन्याः जीववत्साः क्षीरादिधनमर्हन्तीति धन्या वत्साः ईदृश्यस्सत्यः पिबन्तु । किं स्वादूदकमिति सामर्थ्याद्गम्यते । यद्वा—याभिः जीवधन्या भवन्ति ता अपः पिबन्तु । किञ्च—अवसाय अवितव्याय । अवतेरौणादिकोऽसच्प्रत्ययः । पद्वते पादवते सञ्जातगमनसामर्थ्याय अभीताय मृड सुखय । जातावेकवचनम्, 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानत्वम् । देवस्य पशूनां पतित्वात् तमेवासां रक्षणं प्रार्थयते ॥

*तै. सं. १-५-११.

रुद्र मृड । यास्सरूपा विरूपा एक-
रूपा यासामग्निरिष्ट्या नामानि
वेद । या अङ्गिरसस्तपसेह चक्रु-
स्ताभ्यः पर्जन्य महि शर्म यच्छ ।
या देवेषु तनुवमैरयन्त यासाꣳ सो-

वते । रुद्र । मृड । [2]याः । सरूपा इति स-रूपाः ।
विरूपा इति वि-रूपाः । एकरूपा इत्येक-रूपाः ।
यासाम् । अग्निः । इष्ट्या । नामानि । वेद । याः ।
अङ्गिरसः । तपसा । इह । चक्रुः । ताभ्यः । प-
र्जन्य । महि । शर्म । यच्छ । [3]याः । देवेषु । त-
नुवम् । ऐरयन्त । यासाम् । सोमः । विश्वा । रू-

[2]अथ द्वितीया—यास्सरूपा इति ॥ सरूपाः समानसंस्थानाः विरूपाः विविधशुक्लादिवर्णाः एकरूपाः एकजात्यवच्छिन्ना यासां नामानि नमनप्रकारान् यागं प्रति साधनभावात् आज्यपयोदध्विलक्षणान् अग्निरिष्ट्या यागेन वेद जानाति यद्यस्याः विहितं तत्तदेवान्या देवता जानाति अग्निस्तु सर्वाणीति । यां च अङ्गिरसः तपसा इत्थंभूताः तपस्विनश्चक्रुः (कतरव्यत्ययः) । यद्वा—तपसा चक्रुः तपसा शोधितवत्यः । इह ताभ्यः गोभ्यः हे पर्जन्य महि महत् शर्म सुखं यच्छ देहि ॥

[3]अथ तृतीया—या देवेष्विति ॥ या देवेषु देवनिमित्तम् । निमित्तात्सप्तमी । तनुवं आत्मशरीरं ऐरयन्त गमितवत्यः देवयागार्थमेव

मो विश्वा॑ रू॒पाणि॒ वेद॑ । ता अ॒स्म-
भ्यं॒ पय॑सा॒ पिन्व॑मानाः प्र॒जाव॑ती-
रिन्द्र ॥ ४३ ॥ गो॒ष्ठे रिरी॑हि । प्र॒-
जाप॑ति॒र्मह्य॑मे॒ता ररा॑णो॒ विश्वै॑र्दे॒वैः
पि॒तृभि॑स्सं॒विदा॒नः । शि॒वास्स॒तीरुप॑

पाणि॑ । वेद॑ । ताः । अ॒स्मभ्या॒मित्य॒स्म-भ्य॒म् ।
पय॑सा । पिन्व॑मानाः । प्र॒जाव॑ती॒रिति॑ प्र॒जा-व॒तीः ।
इन्द्र॒ ॥ ४३ ॥ गो॒ष्ठ इति॑ गो-स्थे । रि॒री॒हि॒ ।
[4]प्र॒जाप॑ति॒रिति॑ प्र॒जा-प॒तिः । मह्य॑म् । ए॒ताः । र-
रा॑णः । विश्वैः॑ । दे॒वैः । पि॒तृभि॒रिति॑ पि॒तृ-भिः॒ ।
सं॒वि॒दा॒न इति॑ सं-वि॒दा॒नः । शि॒वाः । स॒तीः । उ-
पेति॑ । नः॒ । गो॒ष्ठमिति॑ गो-स्थम् । एति॑ । अ॒-

दत्तवत्यः । यासां रूपाणि दध्यादिलक्षणानि विश्वान्यपि सोमो वेद जानाति ताः पयसा सर्वाः प्रजाः पिन्वमानाः तर्पयन्ति । पिवि प्रीणने । प्रजावतीः शोभनपुत्रपौत्रादिमतीः हे इन्द्र गोष्ठे व्रजे अस्मभ्यं अस्मदर्थं रिरीहि समागमय । रि गतौ । व्यत्ययेन परस्मैपदम्, शपश्श्लुः ॥

[4]चतुर्थी—प्रजापतिरिति ॥ मह्यं मदर्थं प्रजापतिरेता गाः रराणः ददत् उत्पादयन् मह्यं च ददत् । रातेर्व्यत्ययेनात्मनेपदम्, शपश्श्लुः, 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । वि-

नो गोष्ठमाऽकुस्तासां वयं प्रजया
सꣳ संदेम । इह धृतिस्स्वाहेह वि-
धृतिस्स्वाहेह रन्तिस्स्वाहेह रमति-

कः । तासाम् । वयम् । प्रजयेति प्र—जया । स-
मिति । सदेम । [5]इह । धृतिः । स्वाहा । इह । वि-
धृतिरिति वि—धृतिः । स्वाहा । इह । रन्तिः । स्वाहा ।

श्वेः देवैः पितृभिश्च संविदानः ऐकमत्यं गतः । 'समोगमृच्छि' इत्यात्मनेपदम् । शिवाः कल्याणस्वभावाः सतीः सततं भवतीः नः अस्माकं सम्बन्धिनं गोष्ठं गवां स्थानं उपाकः उपाकरोतु उपागमयतु । करोतु वा । करोतेः छान्दसो लुङ्, 'मन्त्रे घस' इति च्लेर्लुक् । लिङि वा शपो लुक् । वयं च तासां गवां प्रजया पुत्रपौत्रादिकया संसदेम सङ्गसीमहि । सीदतेराशिषि लिङि 'लिङ्याशिष्यङ्' इत्यङ्, 'छन्दस्युभयथा' इति सार्वधातुकत्वात् सलोपः ॥

[5]इह धृतिस्स्वाहेत्यादयो धृतयो * 'विभूर्मात्रा' † इत्यत्र व्याख्याताः ॥

[6]'महीमू षु मातरं' 'सुत्रामाणं पृथिवीम्' इति च 'वैश्वानरो नः' ‡ इत्यत्र व्याख्याते । महीमेव सुव्रतानां मातृस्थानीयां ऋतस्य यज्ञस्य सत्रस्य वा पालयित्रीः रक्षणार्थमाह्वयामः प्रवृद्धबलामजरन्तीं उरुगमनां शोभनां सुखहेतुं अखण्डितां शोभनप्रणयामिति प्रथमा ॥

*भूरयो. †सं. ७-१-१२. ‡सं. १-५-११.

स्स्वाहा मही मू षु सुत्रामाणम्॥ ४४
किꣳ स्विदासीत्पूर्वचित्तिः किꣳ
स्विदासीद्बृहद्वयः । किꣳ स्विदासी-

इह । रमतिः । स्वाहा । [6]महीम् । उ । स्विति । [7]सु-
त्रामाणमिति सु—त्रामाणम् ॥ ४४ ॥

इन्द्राष्टात्रिꣳशच्च ॥ १७ ॥

[1]किम् । स्वित् । आसीत् । पूर्वचित्तिरिति पू-
र्व—चित्तिः । किम् । स्वित् । आसीत् । बृहत् ।
वयः । किम् । स्वित् । आसीत् । पिशङ्गिला ।

---

[7]सुत्रामणं पृथिवीं विस्तीर्णां द्यामपापां सुशर्माणमदितिं दैवीं नावं नौस्थानीयां शोभनतरणामनेहसमनवद्यां अच्छिद्रां अविनाशार्थं आरूढा भूयास्मेति द्वितीया ॥

इति सप्तमे चतुर्थे सप्तदशोनुवाकः.

---

[1]अथ होतुः प्रश्नाः ब्रह्मणः प्रतिवचानानि—किं स्विदासीदित्यादीनि आनुष्टुभस्सर्वोनुवाकः । पृच्छामीति द्वे त्रिष्टुभौ । तत्र प्रथमा 'किं स्वित्' इति प्रश्नः । किमिति सामान्यविवक्षया नपुंसकत्वम् । स्विदिति वितर्के । किन्नु पूर्वचित्तिरासीत् पूर्वा प्रथमा चित्तिः ज्ञानमस्याः किन्नु इदमेव श्रेष्ठमिति प्रथमं चिन्त्यत इत्यर्थः । उत्तरापेक्षया स्त्रीलिङ्गता । यद्वा—पूर्वे देवाः त एव चित्तयश्चे-

त्पिशङ्गिला किꣳ स्विदासीत्पिलि-
प्पिला । द्यौरासीत्पूर्वचित्तिरश्व आ-

किम् । स्वित् । आसीत् । पिलिप्पिला । [2]द्यौः ।
आसीत् । पूर्वचित्तिरिति पूर्व–चित्तिः । अश्वः ।

---

तयितारो यस्याः । कर्मणि क्तिन्, कर्तरि बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । तत्रा*न्तोदात्तत्वं छान्दसम् । किन्नु खलु बृहत् महत् वयः अन्नमयमासीत् । यदन्नं लब्ध्वा पुनरन्यदन्नं न मृग्यं भवति तन्महत् । किं वा नु खलु पिशङ्गिलाऽऽसीत् । पिश अवयवे रोधादिकः । इगुपधलक्षणः कः । पिशशब्देन रूपादीन्युच्यन्ते । तानि गिरति छादयतीति छान्दसः कः, करणे वा 'घञर्थे कविधानं' इति कः । पचाद्यचि वा 'बहुलं छन्दसि' इति कित्वम्, 'अचि विभाषा' इति लत्वं पूर्वपदस्याम्भावः । यद्वा—पिशङ्गो नानावर्णः तेन तद्वती पिशङ्गिला तुन्दादिलक्षण इलच् । केन रूपादिकं छाद्यते केन वा प्रकाश्यते इत्यहोरात्राभिप्रायेण प्रश्नः । नानावर्णता चाहर्मिश्रत्वात् । किं वा स्वित् पिलिप्पिला आसीत् अत्यर्थं प्रीणयित्री पिलिप्पिला । पृ प्रीतौ, यङ्लुगन्तात्परिपर्तेः पचाद्यचि गुणे उपधाया इत्त्वं उभयत्र लत्वं पकारोपजनः, अभ्यासस्य चेत्वं छान्दसम् । पिलिप्पिलेति धात्वन्तरसौज्ज्वल्यवाचीति केचित् । ततः पचाद्यच् । का स्वित् उज्ज्वलयित्री प्रजानामिति ॥

[2]अथ उत्तराणि—द्यौरित्यादीनि ॥ द्यौः पूर्वचित्तिः चित्यानां मुख्यत्वात् देवैर्ज्ञातव्यत्वाच्च । तस्य च साधनं अश्वो बृहद्वयः । तेन

---

*इतरथा.

सीद्बृहद्वयः । रात्रिरासीत्पिशङ्गिला-
ऽविरासीत्पिलिप्पिला । कस्स्विदे-
काकी चरति क उं स्विज्जायते पु-
नः । किꣳ स्विद्धिमस्य भेषजं किꣳ

आसीत् । बृहत् । वयः । रात्रिः । आसीत् । पिशङ्गिला । अविः । आसीत् । पिलिप्पिला । [3]कः । स्वित् । एकाकी । चरति । कः । उ । स्वित् । जायते । पुनः । किम् । स्वित् । हिमस्य । भेषजम् । किम् । स्वित् । आवपनमित्या—वपनम् ।

हि सकृदिष्ट्वा वरामुच्छ्रितिं प्राप्य पुनरन्यत्स्थानं भोगार्थमिच्छतीति तस्य निमित्तकारणम् । रात्रिः पिशङ्गिला सा हि रूपाणां छादयित्री स्वयं च प्रकाशाप्रकाशव्यामिश्ररूपा, तारकाभिरन्धकारेण च समन्वितत्वात्, अहर्मिश्रत्वाद्वा । अथ तस्याप्यभिवृद्धिकारणं अविः पिलिप्पिला अवति विश्वमित्यविः वृष्टिः । आदित्यप्रभवा श्रीर्वा । सा हि जगत् भृशं प्रीणयति ज्वलयति च 'श्री वै पिलिप्पिला'* इति च ब्राह्मणम् ॥

[3]'किं स्विदासीत्' इत्यादयः प्रश्नाः उक्तान्यादित्यव्यापारजानि प्रश्नप्रतिवचनानि । इदानीमादित्यमारभ्य प्रश्नाः क्रियन्ते—कोनु खलु एकाकी असहायश्चरति; सामर्थ्यात् सर्वदेति गम्यते । सर्वो हि कदाचिदेकाकी चरति । प्रकृतत्वाच्च वृष्टेः प्रवर्तयिता एकाकी चरतीति । क एव खलु पुनर्जायते अत्रापि सामर्थ्यात्

*ब्रा. ३-९-५.

स्विदावपनं महत् । सूर्य एकाकी
चरति ॥ ४५ ॥ चन्द्रमा जायते पु-
नः । अग्निर् हिमस्य भेषजं भूमि-
रावपनं महत् । पृच्छामि त्वा पर-

महत् । [4]सूर्यः । एकाकी । चरति ॥ ४५ ॥ चन्द्र-
माः । जायते । पुनः । अग्निः । हिमस्य । भेष-
जम् । भूमिः । आवपनमित्या—वपनम् । महत् ।
पृच्छामि । त्वा । परम् । अन्तम् । पृथिव्याः ।
[5]पृच्छामि । त्वा । भुवनस्य । नाभिम् । पृच्छा-

---

पुनःपुनरिति गम्यते । सर्वोऽपि हि मृत्वा पुनर्जायते । प्रकृत-त्वाच्चादित्यवशात् पुनःपुनर्जायत इति । किं नु खलु हिम-स्य शैत्यस्य भेषजं निवर्तकं प्रकृतत्वाच्च चन्द्रमसोत्पादितस्य । किन्नु खलु महदावपनं आवापस्थानं उप्यन्ते अस्मिन्नित्यावपनम्॥

[4]अथोत्तराणि—सूर्य इत्यादीनि ॥ सूर्योऽसहायः सर्वदा दिवि चरति । सेनान्यादीनामनुपलम्भात् असहायत्वं मन्यन्ते । चन्द्र-माः पुनःपुनरादित्याज्जायते । तदुत्पादितस्य हिमस्याग्निर्भेषजम् । तत्सृष्टानामोषध्यादीनां भूमिरावपनमिति ॥

[5]एवं भूम्यन्तानि प्रश्नप्रतिवचनानि । अधुना भूमेरारभ्य प्रश्नाः क्रियन्ते—पृच्छामीत्याद्याः ॥ हे ब्रह्मन् त्वां पृच्छामि पृथिव्याः पर-मन्तं यत्र सर्वा पृथिवी समाप्ता । अथ तत्र प्रतिष्ठितां भुवनस्य

मन्तं पृथिव्याः पृच्छामि त्वा भुव-
नस्य नाभिम् । पृच्छामि त्वा वृ-
ष्णो अश्वस्य रेतः पृच्छामि वाचः
परमं व्योम । वेदिमाहुः परमन्तं
पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् ।

मि । त्वा । वृष्णः । अश्वस्य । रेतः । पृच्छामि । वाचः । परमम् । व्योमेति वि–ओम । [6]वेदिम् । आहुः । परम् । अन्तम् । पृथिव्याः । यज्ञम् । आहुः । भुवनस्य । नाभिम् । सोमम् । आहुः ।

---

नाभिं पृच्छामि यत्र प्रतिबद्धं सर्वं जीवति स नाभिः 'नहोभश्च' इतीञ्प्रत्ययः । हेतुं च पृच्छामि तस्य वृष्णो वर्षितुरश्वस्य व्यापकस्य किं रेतः यतस्सर्वं जायते । अथ तच्च पृच्छामि वाचो वेदात्मिकायाः ऋगादेः तस्य रेतसो विधात्र्याः किं परमं व्योम प्रकृष्टं रक्षास्थानं सर्गप्रतिसर्गनिबन्धनं व्योमेति । विपूर्वादवतेः मन्प्रत्ययः, 'ज्वरत्वरस्रिव्यविमवाम्' इत्यादिना ऊठि गुणः ॥

[6]अथोत्तराणि वेदिमित्यादीनि ॥ पृथिव्याः परमन्तं वेदिमाहुः ब्रह्मवादिनः 'सा वा इयं सर्वैव वेदिः' * इति च स्तूयते । तत्र निवर्त्यं यज्ञमाहुः भुवनस्य सर्वस्य भूतजातस्य नाभिः । तस्य वृष्णः अश्वस्य यज्ञस्य रेतः सोममाहुः सर्वस्य बीजं यागद्वारेण वृष्ट्याद्युत्पत्तिहेतुत्वात् । अश्वस्यैव वा वर्षितुः सोमो

---

*सं. ६-२-४.

सोमंमाहुर्वृष्णो अश्वंस्य रेतो ब्रह्मै-
व वाचः पंरमं व्योम ॥ ४६ ॥
अम्बे अम्बाल्यम्बिके न मां नय-

वृष्णंः । अश्वंस्य । रेतंः । ब्रह्मं । एव । वाचः ।
परमम् । व्योमेति वि-ओम ॥ ४६ ॥

सूर्यं एकाकी चंरति षट्चत्वारिंशच्च ॥ १८ ॥

[1]अम्बे । अम्बालि । अम्बिके । न । मा । न-

---

रेतः सर्वलोकजीवनोद्दकहेतुभूतसोमसाधनत्वात् । तत्फलं वाचः परमं व्योम ब्रह्मैव परमात्मैव प्राप्यत इति ॥

इति सप्तमे चतुर्थे अष्टादशोनुवाकः.

---

[1]महिषीं सर्वैरलङ्कारैरलङ्कृतां गर्हमाणां निह्नुवानां अध्वर्युरुदानयति—अम्ब इति गायत्र्या ॥ अध्वर्युणा महिष्यामन्त्रयते एतैस्त्रिभिरामन्त्रितैः पर्यायैः बहुभिरपि । हिंसादंचेदमध्येषणरूपं ? । लोके हि प्रेमातिभरेण क्कारो भवन्ति मातर्दारिके स्वामिनीति । एवमत्रापि वेदितव्यम् । भुङ्क्ष्वेति शेषः । 'छन्दसि वेति वक्तव्यम्' इति प्रथमस्याम्बार्थलक्षणह्रस्वत्वाभावः । तृतीयस्य तु 'डलकवतीनां प्रतिषेधः' इति प्रतिषेधः, 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानत्वान्निघाताभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । अथ सा ब्रवीति—न मा नयति न मां यब्धुं क्षमो नयति कश्चन

ति कश्चन । ससस्त्यश्वकः । सुभगे काम्पीलवासिनि सुवर्गे लोके सं

यति । कः । चन । ससस्ति । अश्वकः । [2]सुभग इति सु-भगे । काम्पीलवासिनीति काम्पील-वासिनि । सुवर्ग इति सुवः-गे । लोके । सम् । प्रे-

---

कश्चिदपि अयं चाश्वकः क्षमोपि ससस्ति स्वपिति । कुत्सायां प्रागिवीयः कः । मय्यशयानायामेव स्वयं तूष्णीं शेते इति रोषेण कुत्सा प्रयुक्ता । षस स्वप्ने, आदादिकः व्यत्ययेन शपश्लुः । केचिदेकवाक्यत्वेन व्याचक्षते—महिष्येव स्वात्मानमेव एतैरामन्त्रयते यब्धुरभावनिमित्तं विषादमिव दर्शयतीति । अन्ये पुनराहुः—अतिरभसप्रभवा यब्धुरेवामन्त्रितफणितय इति । एवं प्रयुञ्जानः को मामानीय भवेदिति ॥

[2]अध्वर्युस्तार्प्येण वाससा महिषीमश्वं च संप्रोर्णोति—सुभग इति यजुषा ॥ हे सुभगे शोभनभगे काम्पीलवासिनि काम्पीलं नाम श्लाघ्यो वस्त्रविशेषः हे तद्वासिनि तदाच्छादिनि । यद्वा—काम्पीलो नाम देशविशेषः तत्र वसन्ती काम्पीलवासिनि । काम्पीले हि स्त्रियो दर्शनीया सुभगाश्च भवन्तीति प्रसिद्धिः । हे तथाभूते । उभयोरप्यामन्त्रिताद्युदात्तत्वम् । सा त्वमश्वश्च युवां सुवर्गे लोके स्वर्गलोकस्थानीये संज्ञपनस्थाने अस्मिन् संप्रोर्ण्वाथां संछन्नौ सहवसताम् । यद्वा—सुवर्गे लोके निमित्तसप्तम्यौ; स्वर्गस्थानीयं यद्भोगसुखं तन्निमित्तं संप्रोर्ण्वाथामिति । छान्दसो लिङ्गव्यत्ययः ॥

प्रोर्ण्वाथाम् । आऽहमजानि गर्भधमा त्वमजासि गर्भधम् । तौ सह चतुरः पदस्सं प्र सारयावहै । वृषा वाꣳ रेतोधा रेतो दधातूत्सक्थ्योर्गृदं धेहि

ऊर्ण्वाथाम् । [3]एति । अहम् । अजानि । गर्भधमिति गर्भ—धम् । एति । त्वम् । अजासि । गर्भधमिति गर्भ—धम् । तौ । सह । चतुरः । पदः । सम् । प्रेति । सारयावहै । [4]वृषा । वाम् । रेतोधा इति रेतः—धाः । रेतः । दधातु । उदिति । सक्थ्योः । गृदम् । धेहि । अञ्जिम् । उदञ्जिमित्युत्—

[3]महिष्या उपस्थे शेफमाधत्ते—आऽहमजानीत्यनुष्टुभा ॥ आहमजानि त्वामाभिमुख्येन आगच्छामि । अज गतिक्षेपणयोः । गर्भधं गर्भधातारं त्वमपि मां आत्वमजासि आभिमुख्येनागच्छ । तस्मादेव धातोर्लेट्यडागमः । गर्भधं गर्भस्य धात्रीं धारयित्रीम् । छान्दसो लिङ्गव्यत्ययः । तावावां त्वं चाहं च सहशयानौ चतुरः पदः पादान् संप्रसारयावहै । अश्वस्याग्निमौ हस्तावित्यभिप्रायः । स्त्रीपुंसयोर्मैथुनाय सहशयानयोश्चत्वारः पादाः संश्लिष्टाः प्रसारिताश्च भवन्ति । 'पादः पत्' इति पद्भावः, 'ऊडिदम्' इति विभक्तेरुदात्तत्वम्, 'त्यदादीनां यद्यत्परम्' इति अस्मदश्शेषः ॥

[4]तावध्वर्युरभिमन्त्रयते—वृषा वामित्यत्यष्ट्या अष्टपद्या ॥ दधात्विति प्रथमपादान्तः । वां युवयोर्दम्पत्योर्मध्ये वृषा सेक्ता सेचनसमर्थः रेतोधाः रेतसो धाता पतिः रेतो दधातु स्थापयतु ।

ह्याञ्जिमुदञ्जिमन्वज । यस्स्त्रीणां जीवभोजनो य आसाम् ॥ ४७ ॥ बिलधावनः । प्रियस्स्त्रीणामपीच्यः ।

अञ्जिम् । अन्विति । अज । यः । स्त्रीणाम् । जीवभोजन इति जीव-भोजनः । यः । आसाम् ॥ ४७ ॥ बिलधावन इति बिल-धावनः । प्रियः । स्त्रीणाम् । अपीच्यः । यः । आसाम् । कृष्णे ।

तदर्थमित्थं कर्तव्यमित्याह—वृषणमूले सक्थ्योः तयोर्मध्ये गृदं गुदस्योर्ध्वप्रदेशं धेहि ऊर्ध्वं स्थापय यत् प्रजननं ब्राह्मणमाहुः । 'ई च द्विवचने' इति सक्थिशब्दस्य ईकारः । उदात्त इति तत्रानुवर्तते । 'उदात्तयणः' इति विभक्तेरुदात्तत्वं बाधित्वा व्यत्ययेन 'उदात्तस्वरितयोर्यणः' इति स्वरितत्वं प्रवर्तते । 'गृ सेचने' इत्यस्मादौणादिके दक्प्रत्यये गृदमिति भवति । ततस्तथा कृत्वा अञ्जि प्रजननं उदञ्जि उपस्थं प्रवेशय । अञ्ज्यते प्रजा अनेनेति अञ्जिः । सर्वे चैते मन्त्राः प्रहेळिकास्थानीयाः अन्यपराक्षरत्वात् अश्वमेधप्राशस्त्याभिप्राया एव । 'अप वा एतस्माच्छ्री राष्ट्रं क्रामति'* इत्यत्र तथैव प्रतिपादयिष्यते । अधुना अञ्जिर्विशेष्यते—यस्स्त्रीणां जीवभोजनः जीवो भुङ्क्तेऽनेनेति जीवभोजनः । जीवो भुज्यते रक्ष्यते अनेनेति वा । अन्ये त्वाहुः—स्त्रीणां संबन्धि जीवभोजनः जीवत्वहेतुः भोजनं; अनेन हि भोगे सति पुरुषा जीवन्तीत्युच्यते, अन्यथा मृता एवेति । तादृशश्च भोगः अनेन क्रियते इति । स्त्रीणामिति 'नामन्यतरस्याम्' इति नाम उदा-

*ब्रा. ३-९-७.

य आसां कृष्णे लक्ष्मणि सार्दिगृ-
लक्ष्मणि । सार्दिगृदिम् । परावधीदिति परा-अवं-

त्तत्वम् । पुनश्च विशेष्यते—य आसां स्त्रीणां बिलधावनः बिलं छिद्रं प्रति धावति नान्यदस्याह्निकं* कर्म । यद्वा—नैवं बिलधावनकुशलोन्योस्ति । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । किंच—प्रियः स्त्रीणां 'नामन्यतरस्यां' इति नाम उदात्तत्वम् । पुनश्च विशेष्यते—भृशं प्रीणयिता कीदृशस्सन् अपीच्यः अप्रकाशः अपिगमनमप्ययः अन्तर्धानं पुनःपुनश्चलनं वा । अपिपूर्वादञ्चतेः 'ऋत्विक्' इत्यादिना क्विन्प्रत्ययः । ततो 'भवे छन्दसि' इति यत्, 'अचः' इत्यकारलोपः, 'चौ' इति पूर्वपदस्य दीर्घत्वम् । अप्रकाशस्सन् पुनःपुनर्वा विशन् स्त्रीणां प्रीणन इति । तत्र किं कुर्वन् प्रीणयतीत्याह—योयमश्रिरासां स्त्रीणां कृष्णे कर्षणीये लक्ष्मणि योनेरभ्यन्तरप्रदेशविशेषो लक्ष्म । उपस्थमिति केचित् स्त्रीणां व्यञ्जनमिति कृत्वा । तत्र सार्दिगृदिं सरणशीलं गुदस्योपरिभागं परावधीत् पराहन्ति । छान्दसो लुङ् । असिश्छिनत्तीतिवत् करणे कर्तृनिर्देशः । आरूढो ह्यनेन तं देशं पराहन्ति । उक्तं हि—आञ्जिं उदञ्जिमन्वजेति । सृ गतौ । गृ सेचने । आभ्यामौणादिकोऽप्रत्ययः । सारणमुत्सारणं पुंस उत्थान†स्थानीयं यद्योनिबृह्मणमिति प्रसिद्धं तादृशं गृदिमिति कर्मधारयसमासे दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—सरणशीलो गृदिः यस्मिन् स्थानविशेषे यत् शुक्लेन सिच्यते तादृशं स्थानं सार्दिगृदिशब्देनोच्यते । 'बहुव्रीहौ प्रकृत्या' इति पूर्वपदप्रकृतिस्वरत्वम् । सर्वथा व्युत्पत्त्यनवधारणात् नावगृह्यते । तादृशमुदञ्जिमन्वजेति ॥

*नान्यदस्यास्ति. †पुंसं जनस्या.

दिं पुराऽवंधीत् । अम्बे अम्बाल्य-
म्बिके न मां यभति कश्चन । सस-
स्त्यंश्वकः । ऊर्ध्वामेनामुच्छ्रयताद्वे-
णुभारं गिराविव । अथांस्या मध्यं-

धीत् । [5]अम्बे । अम्बालि । अम्बिके । न । मा । यभति । कः । चन । ससस्ति । अश्वकः । [6]ऊर्ध्वाम् । एनाम् । उदिति । श्रयतात् । वेणुभारमिति वेणु—भारम् । गिरौ । इव । अर्थ । अस्याः ।

---

[5]महिषी गर्हते—अम्ब इत्यादिना ॥ मय्युपशयानायामपि न मा यभति । यभ मैथुने । ससस्त्येवायमश्वकः न कश्चिदन्यः क्षमः मां यब्धुम् । न वाऽन्योऽस्य व्यापारयिता ॥

[6]तां यजमानः अभिमेधति—ऊर्ध्वामित्यनुष्टुभा ॥ असहमान इव ब्रवीति । एनां योनिमूर्ध्वां उच्छ्रयतात् उच्छ्रितां कुरु उच्छ्रितं प्रजननं प्रत्युत्थितां कुरु वेणुभारमिव गिरौ भारहारः स यथा विवक्षुः जीवो गौरवेण भारमुच्छ्रयति । वेणुग्रहणं सुखनिपात्यत्व-ख्यापनार्थम् । अथानन्तरमस्यास्तथा उच्छ्रिताया मध्यमेधतां वर्धताम् । अभिमतान्तःप्रवेशेन । सर्वो ह्यभिमतलाभेन वर्धते हर्षं गच्छति यथा शीते वाते पुनन् खलपूः पवनेन श्रान्तो वातलाभेन वर्धते । अन्य आह—यथा शीते वाते पुनन् वर्धते वर्धिष्यतीति त्वरते एव-मस्या मध्यं उच्छ्रयणानन्तरं वर्धिष्यतीति । एवमिमां कर्तुं ऋक्सा-मो (?) नास्ति अयं त्वश्च इदानीं विश्राम्यात्विति* ॥

*एवमिमं मत्समानेनास्त्ययं त्वश्च इदानीं वश्रितो विश्राम्यत्विति.

मेधतां शीते वाते पुनन्निव । अ-
मध्यम् । एधताम् । शीते । वाते । पुनन् । इव ।
7अम्बे । अम्बालि । अम्बिके । न । मा । यभति ।

7अथ सा तथैव गर्हते—अम्ब इति ॥

8अथ वावाताऽभिमेधयति—यद्धारिणीत्यनुष्टुभा ॥ यदा हरिणी यवं क्षेत्रेषु उप्तमत्ति भक्षयति तदा न पशु साधु पुष्टं मन्यते अकृतार्थैव पुनर्भक्षयति न कदाचिदपि पर्याप्तं मन्यते एवं अकृतार्थैव भूयोभूयो भोक्तुं इयमेव क्षमेति । पशुशब्दोऽसत्त्ववचनोव्ययम् । अन्य आह—यथा हरिणी क्षेत्रिकस्य अप्रज्ञातम् । 'सुपां सुलुक्' इति सुपो लुक् एवं भोक्तुं त्वमेव क्षमेति । किञ्च—शूद्रा शूद्रजातीया स्त्री यवं भक्षयति तत्तं पुष्टमपि भोगं पशु न क्षेत्रिको मन्यते न जानाति । 'सुपां सुलुक्' इति सुपो लुक् । एवं भोक्तुं त्वमेव क्षमेति । किञ्च—शूद्रा शूद्रजातीया स्त्री । 'शूद्राचामहत्पूर्वा जातिः' इति टाप् । सा यदा अर्यजारा भवति । अर्यो ब्राह्मणादिः स जारो यस्याः । 'अर्यस्स्वामिवैश्ययोः' इति निपात्यते । सा किं तदानीं पोषाय कुटुम्बाभिवृद्धये धनायति स्पृहयति कुटुम्बं मे वर्धतां परिशुद्धमपत्यं मे जायतामिति नेयं प्रवर्तते भोगार्थं नूनं जानासि* या त्वमेवं तृप्यसीति । 'अशनायोदन्यधनाया' इति गर्धे निपात्यते । अन्य आह—धनायति धनमात्मन इच्छति 'सुप आत्मनः' इति क्यप् 'छन्दस्यपुत्रस्य' इतीत्वाभावः । शूद्रा अर्यजारा भवन्ती तत्र किं पुष्ट्यर्थं धनमिच्छन्ती धनं जिघृक्षति । किञ्च या नूनं जाता तदेवमतृप्तभोगायैव भवसीति ॥

*भोगार्थं तु स त्वं न जानासि.

म्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः । यद्धरिणी यवमत्ति न ॥४८॥ पुष्टं पशु मन्यते । शूद्रा यदर्यजारा न पोषाय धनायति । अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः । इयं यका शकुन्तिकाऽऽहलमिति

कः । चन । ससस्ति । अश्वकः । [8]यत् । हरिणी । यवम् । अत्ति । न ॥ ४८ ॥ पुष्टम् । पशु । मन्यते । शूद्रा । यत् । अर्यजारेत्यर्य-जारा । न । पोषाय । धनायति । [9]अम्बे । अम्बालि । अम्बिके । न । मा । यभति । कः । चन । ससस्ति । अश्वकः । [10]इयम् । यका । शकुन्तिका । आहल-

[9]महिष्या अन्या राज्ञो भोग्या वावाता । अथ सा तथैव गर्हते—अम्ब इति ॥

[10]अथ तां परिवृक्त्योऽभिमेधन्ति—इयं यकेत्यनुष्टुभा ॥ राज्ञो द्वेष्या* भार्या परिवृक्तिः । इयं शकुन्तिका शकुन्तजातीया स्त्री यका याकाचिदपि अविज्ञातविशेषत्वात् । अज्ञातार्थे प्रागिवीयः

*सेर्ष्या.

सर्पति । आहतं गभे पसो नि जं-
ल्गुलीति धाणिका । अम्बे अम्बा-

मित्या-हलम् । इति । सर्पति । आहतमित्या-ह-
तम् । गभे । पसः । नीति । जल्गुलीति । धाणि-

कः, 'न धासयोः' इतीत्वाभावः । इयं सर्वथाऽपि शकुन्तिका आहलं समन्ताच्छब्दयित्वा इति इत्थं यथा* वयं पश्यामः कुरर्यादिषु एवं† भृशं शब्दायमाना दयितमेव सर्पति न जहाति एवं त्वमसीति । हल व्यक्तायां वाचि, छान्दसः कमुल्‡प्रत्ययः । यद्वा—हला इति शकुन्तानामाह्वानशब्दः, आगतहलाशब्दं आहलम् । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । दयितमेवाह्वयन्ती सर्पति न जहातीति । किञ्च—गभे वर्णव्यत्ययः । पसः सुखकरं जलं आहतं आहननोद्गतम् । वर्णलोपो वा§ गर्भे स्थितं बहिरागतं निजल्गुलीति भृशं निगिरति ग्रसते जलं धाणिका पालनशीला । धेटो ल्युटि संज्ञायां कनि 'केणः' इति ह्रस्वत्वे छान्दसो नकारः । व्यत्यस्तविकृतानेकपदोपादानेन रतिरभसं दर्शयति । अन्य आह—धाणिका योनिरेतसो धात्री इयं धाणिका याकाचित् शकुन्तिकेव आहलमिति आकृष्टमिति कृत्वा आकर्षणेन विलेखनेन हेतुना स्वयं सर्पति अभिसर्पति । अस्मिन् पक्षे व्यत्ययेनाख्यातस्य निघाताभावः । किञ्च—गभे गर्भे चाहतं आपादितं पसः शुक्लं निजल्गुलीति निगिरति परिगृह्णाति । अथवा—आहतमिति कृत्वा असौ निजल्गुलीति ग्रसते पिदधाति एवमालपन्ती त्वं न तृप्यसीति ॥

*यथानीतया. †एषु. ‡क्रम. §अवर्णलोपो वा.

ल्यम्बिके न मा यभति कश्चन । स-
सस्त्यश्वकः । माता च ते पिता च
तेऽग्रं वृक्षस्य रोहतः ॥ ४९ ॥ प्र

का । [11]अम्बे । अम्बालि । अम्बिके । न । मा ।
यभति । कः । चन । ससस्ति । अश्वकः । [12]मा-
ता । च । ते । पिता । च । ते । अग्रम् । वृक्षस्य ।

[11]सा भूयोपि तथैव च गर्हते—अम्ब इत्यादिना ॥

[12]अथ तां सर्वा अङ्गना अभिमेधयन्ते—मातेत्यनुष्टुभा ॥ वि-
कारे प्रकृतिशब्दः । वृक्षविकारस्य खट्वाया अग्रं उत्सङ्गं तव
माता च पिता च पूर्वमारोहतः । अथ तत्रारुह्य तव पिता
प्रसुलामि प्रसङ्गेन *त्वां प्रेरयामीति तव मातरं प्रलोभ्य तव
मातुर्गर्भे भगे मुष्टिं मुष्टिस्थानीयं खरं शेफं अतंसयत् प्रावेशयत् ।
षू प्रेरणे तौदादिकः, छान्दसो लकारः । तंसतिरवतंसन-
कर्मा वा । यद्वा—प्रसुलामि प्रसौमि अनुजानामि तवातिप्रसङ्गं
यच्छक्नोषि तत्कुरुष्वेति करिष्यमाणमतिप्रसङ्गं प्रकाशयन् गर्भे
मुष्टिं प्रावेशयदिति । षु प्रसवैश्वर्ययोः, आदादिकः । व्यत्यये-
न शः । स्वपतेर्वा लेव्याडागमः, व्यत्ययेन शपो लुक् ।
'भूसुवोस्तिङि' इति गुणाभावः । एवं त्वमपि अतिप्रस-
क्ताऽसि वर्तस्वेदानीमिति । अन्य आह—माता योनिः, पिता
जननं ; तावुभौ वृक्षस्य वर्पणव्यापारस्य अग्रं परां काष्ठां

*प्रसुलानि, प्रसुवामि, असङ्गेन.

सुलामीति ते पिता गर्भे मुष्टिमत-
ंसयत् । दधिक्राव्ण्णो अकारिषं
जिष्णोरश्वस्य वाजिनः । सुरभि नो
मुखा करत्प्रण आयूंषि तारिषत्।

रोहतः ॥ ४१ ॥ प्रेति । सुलामि । इति । ते ।
पिता । गर्भे । मुष्टिम् । अतंसयत् । [13]दधिक्राव्-
ण्ण इति दधि—क्राव्ण्णः । अकारिषम् । जि-
ष्णोः । अश्वस्य । वाजिनः । सुरभि । नः । मु-
खा । करत् । प्रेति । नः । आयूंषि । तारिषत् ।

रोहतः प्राप्तवन्तौ अथानन्तरं पिता प्रसुलामि प्रकर्षेण प्रेरितं मयेति एतावन्तं कालमनुज्ञातं मयेति वा कृपामतीवोद्भावयन् तव गर्भे मातरि कृतमुष्टिं संयोगमुद्रामतंसयत् शिथिलीकृत्य निरगमत् ; तेनेदानीमुत्तिष्ठेति । तसु क्षये छान्दसो नुमागमः ॥

[13]सर्वे सुरभिमतीमृचं जपन्ति—दधिक्राव्ण्ण इत्यनुष्टुभा ॥ व्याख्यातेयं 'वैश्वानरो नः'* इत्यत्र । दधीनि वारणहवींषि क्रमतोऽग्नेः जिष्णोः जयशीलस्य अश्वस्य व्यापकस्य वाजिनः अन्नवतः अहमकार्षं कर्मकरस्स्याम् । स चास्माकं मुखानि सुरभीणि सुकृतैः समासादितसौरभाणि करोतु । आयूंषि च अस्मभ्यं प्रतारिषत् वर्धयत्विति ॥

*सं. १-५-११.

आपो हि॒ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन । म॒हे रणा॑य॒ चक्ष॑से । यो व॑श्शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः । उ॒श॒तीरि॑व मा॒तरः । तस्मा॒ अरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ । आपो॑ ज॒नय॑था च नः ॥५०॥

[14]आपः॑ । हि । स्थ । म॒यो॒भुव॒ इति॑ मयः—भुवः॑ । ताः । न॒ः । ऊ॒र्जे । द॒धा॒त॒न॒ । म॒हे । रणा॑य । चक्ष॑से । यः । व॒ः । शि॒वत॑म॒ इति॑ शि॒व—त॒मः॒ । रसः॑ । तस्य॑ । भा॒ज॒य॒त॒ । इ॒ह । न॒ः । उ॒श॒तीः । इ॒व॒ । मा॒तरः॑ । तस्मै॑ । अर॑म् । ग॒मा॒म॒ । व॒ः ।

[14]अद्भिर्मार्जयन्ते—आपो हिष्ठेति तिसृभिर्गायत्रीभिः ॥ एताश्च तिस्रः 'वि पाजसा '* इत्यत्र व्याख्याताः । हे आपः यूयं आपो व्यापिकास्स्थ । मयोभुवः सुखस्य भावयित्र्यः ता यूयं ऊर्जे अन्नार्थं रसार्थं वा दधातन धारयत । महते रमणीयाय दर्शनीयाय वा युष्माकं शिवतमो रसः तमस्मान् सेवयत । इहास्मिन्कर्मणि कामयमानाः स्नेहवत्यो मातर इव युष्माकं सम्बन्धिने तस्मै रसाय पर्याप्तये अरं गमाम ततः पर्याप्तं गम्यास्म । यस्य रसस्य निवासभूतं पुरुषं जिन्वथ प्रीणयत । अस्माकं

*सं. ४-१-५.

भूर्भुवस्सुवर्वसंवस्त्वाऽञ्जन्तु गाय-
त्रेण छन्दसा रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभे-
न छन्दसाऽऽदित्यास्त्वाऽञ्जन्तु जा-
गतेन छन्दसा यद्वातो अपो अग-

यस्य । क्षयाय । जिन्वथ । आपः । जनयथ ।
च । नः ॥ ५० ॥

आसामत्ति न रोहतो जिन्वथ चत्वारि च ॥१९॥

[1]भूः । भुवः । सुवः । वसवः । त्वा । अञ्जन्तु ।
गायत्रेण । छन्दसा । रुद्राः । त्वा । अञ्जन्तु ।
त्रैष्टुभेन । छन्दसा । आदित्याः । त्वा । अञ्जन्तु ।
जागतेन । छन्दसा । [2]यत् । वातः । अपः । अग-

---

जनयथा च जातान् कुरुत, युष्मदीयरसलाभेन हि जाता भवन्तीति ॥

इति सप्तमे चतुर्थे एकोनविंशोनुवाकः.

---

[1]पत्नचोश्वमञ्जन्ति । प्राक्क्रोडात् महिषी 'वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा' इति भूरिति च । अथ क्रोडादारभ्या नाभेर्वावाता 'रुद्रास्त्वांजन्तु त्रैष्टुभेन छन्दसा' इति भुव इति च । तथा नाभेरारभ्य आपुच्छात् परिवृक्तिः 'आदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसा' इति सुवरिति च । गता मन्त्राः ॥

[2]अथ शालां नयन्ति—यद्वात इति ॥ पथ्या बृहतीयं, तृतीयस्य पादस्य द्वादशाक्षरत्वात् । पुनारिति तस्यान्तः । हे स्तो-

मदिन्द्रस्य तनुवं प्रियाम् । एतꣳ स्तोतरेतेन पथा पुनरश्वमा वर्तयासि नः । लाजी३ञ्छाची३न् यशो म-

मत् । इन्द्रस्य । तनुवम् । प्रियाम् । एतम् । स्तोतः । एतेन । पथा । पुनः । अश्वम् । एति । वर्तयासि । नः । [3]लाजी३न् । शाची३न् । यशः । ममा४म् । यव्यायै । गव्यायै । एतत् । देवाः । अन्नम् । अत्त ।

---

तः शब्दायितः वायो यत् येन पथा । 'सुपां सुलुक्' इति लुक् । वातः प्राणाख्या तव वृत्तिः अपः अगमत् अगमयत् । 'बहुलमन्यत्रापि' इति णिलुक् । 'छन्दस्युभयथा' इत्यार्धधातुकत्वात् शपः । इन्द्रस्य प्रियां तनुवं तनुम् । 'तन्वादीनां छन्दसि' इत्युवङ् । एतेन पथा एतं अश्वं पुनरस्मान् प्रत्यावर्तयासि । आवर्तयतेर्लेट्याडागमः । (अस्माकं वा) ॥

[3]अश्वाय मधुमिश्रान् लाजान् प्रकिरति—लाजीनित्यनुष्टुभा ॥ हे लाजवन् लाजिन् हे शाचवन् शाचिन् । यशो ममामित्यस्य मम यशोहेतोः । 'परमपि छन्दसि' इति षष्ठ्यन्तस्य पूर्वाङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य स्वरः । त्रयाणामपि पूर्वपूर्वाविद्यमानवद्भावेन भावितं आमन्त्रिताद्युदात्तत्वम् । 'दूराद्धूते च' इत्युदात्तः प्लुतः, तस्यासिद्धत्वादुत्तरस्य वर्जमानस्वराभावः । अन्त्यस्य 'यणोऽप्रगृह्यस्य' इति सानुनासिकः प्लुतः । यव्यायै गव्यायै च यूयं नो भवत हे लाजा हे सक्तवः । यवानां समूहो यव्या ।

मा४म् । गव्याये गव्याया एतद्देवा
अन्नमत्तैतदन्नमद्धि प्रजापते । युञ्ज-
न्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
रोचन्ते रोचना दिवि । युञ्जन्त्यस्य

एतत् । अन्नम् । अद्धि । प्रजापत इति प्रजा–पते ।
[4]युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परीति । त-
स्थुषः । रोचन्ते । रोचना । दिवि । [5]युञ्जन्ति । अ-

---

'पाशादिभ्यो यः' । गवां समूहो गव्या 'खलगोरथात्' इति यः । यदन्तश्च स्वभावतः स्त्रियां वर्तते । एतच्चान्नमिव इममश्वं अनुप्रविश्य हे देवाः अत्त । प्रजापते त्वमपि एतदन्नमद्धि । प्राधान्यात् पुनरुपादानं प्रजापतेः । यथा—ब्राह्मणा आयाताः वसिष्ठोप्यायात इति ॥

[4]अश्वं रथे युनक्ति—युञ्जन्ति ब्रध्नमिति ॥ एतास्तिस्रो गायत्र्यः । युञ्जन्ति युञ्जन्तु ब्रध्नं परिबृढमश्वं अरुषं अरोषणं चरन्तं साधुचरणं परितस्थुषः परितस्थिवांसः । विभक्तिव्यत्ययः । (व्यष्टिं चिते) रोचन्ते अस्य पृष्ठे रोचनानि रोचमानानि रश्मयः दिवि । 'अनुदात्तेतश्च हलादेः' इति रोचतेर्युच् । 'शेश्छन्दसि' इति शेर्लोपः ॥

[5]इतरयोः पृष्ठे संमृज्येते—युञ्जन्ति युञ्जन्तु अस्य काम्या काम्यौ इष्टौ । कामयतेरमी यत्, 'सुपां सुलुक्' इत्याकारः । हरी अश्वौ विपक्षसा विपक्षसौ उभयोः पक्षयोः स्थितौ । पूर्वव-

काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा । केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे । समुषद्भिरजायथाः ॥ ५१ ॥

स्य । काम्या । हरी इति । विपक्षसेति वि-पक्षसा । रथे । शोणा । धृष्णू इति । नृवाहसेति नृ-वाहसा । [6]केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । सम् इति । उषद्भिरित्युषत्-भिः । अजायथाः ॥ ५१ ॥

ब्रध्नं पञ्चविंशतिश्च ॥ २० ॥

---

दाकारः । रथे शोणा शोणवर्णौ आलोहितौ धृष्णू धर्षणसमर्थौ शत्रूणां नृवाहसा नॄन् वहन्तीति नृवाहसौ मनुष्यवाहौ । 'वहिहाधाञ्भ्यश्छन्दसि' इत्यसुन् । 'कारकपूर्वात्' इति, णिदिति च तत्रानुवर्तते । पूर्ववद्दाकारः ॥

[6]ध्वजं प्रतिमुञ्चति—केतुं ध्वजं कृण्वन् कुर्वन्तु । कृवि हिंसाकरणयोः, लेटि 'धिन्विकृण्व्योरच' इत्युप्रत्ययः, छान्दसो निघाताभावः । अकेतवे असत्यस्मिन्नज्ञापकाय पेशः रूपं रूपबृन्दं हे मर्याः मनुष्याः । 'छन्दसि निष्टर्क्य' इत्यत्र निपात्यते । अपेशसे असत्यस्मिन् रूपरहिताय । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । तथा हि सति त्वं उषद्भिः ज्वलद्भिरिव समजायथाः ज्वालावानिव संजायस्व । जानातेर्वा छान्दसो जभावः ।

प्राणाय स्वाहा व्यानाय स्वाहाऽपा-
नाय स्वाहा स्नावंभ्यस्स्वाहा सं-
तानेभ्यस्स्वाहा परिसंतानेभ्यस्स्वा-
हा पर्वभ्यस्स्वाहा संधानेभ्यस्स्वा-
हा शरीरेभ्यस्स्वाहा यज्ञाय स्वा-

[1]प्राणायेति प्र-अनाय । स्वाहा । व्यानायेति वि-अनाय । स्वाहा । अपानायेत्यप-अनाय । स्वाहा । स्नावंभ्य इति स्नावं-भ्यः । स्वाहा । सन्तानेभ्य इति सं-तानेभ्यः । स्वाहा । परिसन्तानेभ्य इति परि-सन्तानेभ्यः । स्वाहा । पर्वभ्य इति पर्व-भ्यः । स्वाहा । सन्धानेभ्य इति सं-धानेभ्यः । स्वाहा । शरीरेभ्यः । स्वाहा । यज्ञाय । स्वाहा । दक्षिणाभ्यः । स्वाहा । सुवर्गायेति

ज्ञापकेन हेतुना ज्वालावानिव सर्वत्र ज्ञायस्व । 'ढक् स्वव-स्स्वतवसाम्' इत्यादिना उषसः तत्वम् ॥

इति सप्तमे चतुर्थे विंशोनुवाकः.

[1]अथ नक्तं होमेष्वेव सन्ततिहोमाः—प्राणाय स्वाहा व्यानाय स्वाहा इत्याद्याः । प्राणादयश्शब्दा निगदसिद्धाः ॥

इति सप्तमे चतुर्थे एकविंशोनुवाकः.

हा दक्षिणाभ्यस्स्वाहा सुवर्गाय स्वा-
हा लोकाय स्वाहा सर्वस्मै स्वाहा॥
सिताय स्वाहाऽसिताय स्वाहाऽभि-
हिताय स्वाहाऽनभिहिताय स्वाहा
युक्ताय स्वाहाऽयुक्ताय स्वाहा सुयु-
क्ताय स्वाहोद्युक्ताय स्वाहा विमु-
क्ताय स्वाहा प्रमुक्ताय स्वाहा वश्चे-

सुवः—गाय । स्वाहा । लोकाय । स्वाहा । सर्व-स्मै । स्वाहा ॥ ५२ ॥

प्राणायाष्टाविꣳशतिः ॥ २१ ॥

[1]सिताय । स्वाहा । असिताय । स्वाहा । अ-भिहितायेत्यभि—हिताय । स्वाहा । अनभिहितायेत्यनभि—हिताय । स्वाहा । युक्ताय । स्वाहा । अ-युक्ताय । स्वाहा । सुयुक्तायेति सु—युक्ताय । स्वाहा। उद्युक्तायेत्युत्—युक्ताय । स्वाहा । विमुक्तायेति वि—मुक्ताय । स्वाहा । प्रमुक्तायेति प्र—मुक्ताय । स्वा-

[1]पुनरपि रात्रिहोमेष्वेव प्रमुक्तिहोमाः—सिताय स्वाहेत्यादयो निगदसिद्धा एव ॥

इति भट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये
सप्तमे काण्डे चतुर्थे प्रश्ने द्वाविंशोनुवाकः.

ते स्वाहा परिवञ्चते स्वाहा संवञ्चते
स्वाहाऽनुवञ्चते स्वाहोद्वञ्चते स्वाहा
यते स्वाहा धावते स्वाहा तिष्ठते
स्वाहा सर्वस्मै स्वाहा ॥ ५३ ॥

हा । वञ्चते । स्वाहा । परिवञ्चत इति परि–वञ्चते । स्वाहा । संवञ्चत इति सं–वञ्चते । स्वाहा । अनुवञ्चत इत्यनु–वञ्चते । स्वाहा । उद्वञ्चत इत्युत्–वञ्चते । स्वाहा । यते । स्वाहा । धावते । स्वाहा । तिष्ठते । स्वाहा । सर्वस्मै । स्वाहा ॥ ५३ ॥

सितायाष्टात्रिंशत् ॥ २२ ॥

बृहस्पतिरश्चयथा वा ऋक्षा वै प्रजापतिर्येनयेन द्वे वावादित्या वसिष्ठस्संवत्सराय सुवर्गं ब्रह्मवादिनो ज्योतिष्टोमं मेषः कूप्याभ्योऽद्भ्यो यो नमो मयोभूः किंस्विदम्बे भूः प्राणाय सिताय द्वाविंशतिः ॥ २२ ॥

बृहस्पतिः प्रति तिष्ठन्ति वै दशरात्रेण सुवर्गं
यो अर्वन्तं भूस्त्रिपञ्चाशत् ॥ ५३ ॥

हरिः ओम् श्रीकृष्णार्पणमस्तु

कृष्णयजुर्वेदे सप्तमकाण्डे
चतुर्थप्रश्नः समाप्तः.

हरिः ओम्.

गावो वा एतथ्सत्रमासताशृङ्गास्स-
तीश्शृङ्गाणि नो जायन्ता इति का-
मेन तासां दश मासा निषण्णा
आसन्नथ शृङ्गाण्यजायन्त ता उदं-
तिष्ठन्नराथ्स्मेत्यथ यासां नाजायन्त

[1]गावः । वै । एतत् । सत्रम् । आसत । अशृङ्गाः । सतीः । शृङ्गाणि । नः । जायन्तै । इति । कामेन । तासाम् । दश । मासाः । निषण्णा इति नि–सन्नाः । आसन् । अथ । शृङ्गाणि । अजायन्त । ताः । उदिति । अतिष्ठन् । अरात्स्म । इति । अथ । यासाम् । न । अजायन्त । ताः । संवत्सरमिति सं–वत्सरम् । आप्त्वा । उदिति ।

[1]अथ प्रकृतं गवामयनमेवाधिकृत्याह—गाव इत्यादि ॥ अशृङ्गास्सत्यो गावः शृङ्गाणि अस्माकं जायन्तामिति अनेन कामेन एतत्सत्रमासत । जनेर्लेटि 'वैतोन्यत्र' इत्यैकारः । तासां सत्रमासीनानां दश मासा निषण्णाः निर्गता आसन् । अथानन्तरं दशमासापगमे शृङ्गाण्यजायन्त प्रादुर्भूतानि । ता जातशृङ्गा उदतिष्ठन् सत्रादुत्थिताः अरात्स्म ऋद्धाः कृतकार्या वयमिति । अथ दशसु मासेष्वजातशृङ्गाः संवत्सरमाप्त्वा प्राप्य संवत्सरान्ते उदतिष्ठन् अरात्स्मेति अजातशृङ्गास्स्मोऽधुना वयमिति । तत्र सं-

तास्संवथ्सरमाप्त्वोदतिष्ठन्नराथ्स्मेति
यासां चाजायन्त यासां च न ता
उभयीरुदतिष्ठन्नराथ्स्मेति गोसत्रं वै
॥ १ ॥ संवथ्सरो य एवं विद्वाꣳ सं-
स्संवथ्सरमुपयन्त्यृंध्नुवन्त्येव तस्मा-

अतिष्ठन् । अरात्स्म । इति । यासाम् । च । अ-जायन्त । यासाम् । च । न । ताः । उभयीः । उदिति । अतिष्ठन् । अरात्स्म । इति । गोसत्रमिति गो-सत्रम् । वै ॥ १ ॥ संवत्सर इति सं-वत्सरः । ये । एवम् । विद्वाꣳसः । संवत्सरमिति सं-वत्स-रम् । उपयन्तीत्युप-यन्ति । ऋध्नुवन्ति । एव । [2]तस्मात् । तूपरा । वार्षिकौ । मासौ । पत्वी ।

---

वत्सरान्ते यासां शृङ्गाण्यजायन्त यासां च नाजायन्तेत्येव ता उभयीः उभय्यः जातशृङ्गाश्च वत्सरान्तेऽप्यजातशृङ्गास्तूपराश्च द्विप्रकारा अपि गाव उदतिष्ठन् अरात्स्म वयं सत्रं च संस्थितमिति । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । ननु तूपराणां का सत्वात् वृद्धिरित्यत आह—गोसत्रं वा इत्यादि । गतम् ॥

[2]का तर्हि सा तूपराणां वृद्धिरित्याह—तस्मात्तूपरेत्यादि ॥ सामान्यविवक्षया एकवचनम् । वार्षिकौ मासौ पत्वी प्रीत्वा प्रीता भूत्वा चरति तूपरा इयमेव तस्या वृद्धिः । पृ प्रीतौ । वर्षशब्दात्

त्तूपरा वार्षिकौ मासौ पत्वीं चरति सत्राभिजितꣳ ह्यस्यै तस्मात्संवथ्सरसदो यत्किंच गृहे क्रियते तदाप्तमवरुद्धमभिजितं क्रियते समुद्रं वा एते प्र प्लुवन्ते ये संवथ्सरमु-

चरति । सत्राभिजितमिति सत्र—अभिजितम् । हि । अस्यै । [3]तस्मात् । संवत्सरसद इति संवत्सर—सदः । यत् । किम् । च । गृहे । क्रियते । तत् । आप्तम् । अवरुद्धमित्यव—रुद्धम् । अभिजितमित्यभि—जितम् । क्रियते । [4]समुद्रम् । वै । एते । प्रेति । प्लुवन्ते । ये । संवत्सरमिति सं—वत्स-

'छन्दसि ठञ्' इति ठञ्, 'अत्यन्तसंयोगे च' इति द्वितीया । सत्रेणाभिजितं सत्राभिजितम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[3]तस्मादित्यादि ॥ संवत्सरसदः संवत्सरसत्रिणो गृहे क्रियते यत्किंचिदपि प्रशस्तं क्रियते तदाप्तं पर्याप्तमवरुद्धं काले लब्धं अभिजितं न्यायोपात्तमेव क्रियते । तदर्थैव फलं न निर्मूलमिति यावत् । उभयत्रापि 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

[4]अथ प्रायणीयोदयनीयावतिरात्रावस्य विधातुमाह—समुद्रं वा इत्यादि ॥ एते हि समुद्रं प्रप्लवन्ते आप्लवेन प्रतरन्ति ये

पयन्ति यो वै संमुद्रस्यं पारं न प-
श्यंति न वै स तत उदेति संवथ्स-
रः ॥ २ ॥ वै संमुद्रस्तस्यैतत्पारं य-
दंतिरात्रौ य एवं विद्वाꣳसंस्संवथ्सर-
मुंपयन्त्यनांर्ता एवोद्दचं गच्छन्तीयं

रम् । उपयन्तीत्युंप–यन्तिं । यः । वै । समुद्रस्यं । पारम् । न । पश्यंति । न । वै । सः । ततः । उदिति । एति । संवत्सर इतिं सं–वत्सरः ॥ २ ॥ वै । समुद्रः । तस्यं । एतत् । पारम् । यत् । अतिरात्रावित्यंति–रात्रौ । ये । एवम् । विद्वाꣳसंः । संवत्सरमितिं सं–वत्सरम् । उपयन्तीत्युंप–यन्तिं । अनांर्ताः । एव । उदृचमित्युंत्–ऋचम् । गच्छन्ति । [5]इयम् । वै । पूर्वः । अतिरात्र इत्यंति–रा-

---

संवत्सरसत्रमुपयन्ति । यश्च समुद्रे तरन् तस्य पारं न पश्यति स खलु ततो नोदेति नोत्तरति । संवत्सरसत्रं च दुस्तरत्वात् समुद्रस्थानीयम् । तस्य चैतौ पारस्थानीयौ अतिरात्रौ । तस्माद्य एवं विद्वांस उभयतोतिरात्रं संवत्सरसत्रमुपयन्ति ते अनार्ता एव दृष्टपारत्वादक्लेशा एव उदृचं सत्रसमाप्तिं गच्छन्तीति । अतिरात्रयोर्विधिः । ऋचेरुत्पूर्वात्संपदादिलक्षणः क्विप् ॥

[5]अथातिरात्रयोस्स्तुतिः—इयं वा इत्यादि ॥ इयं पृथिवी पूर्वः

वै पूर्वोऽतिरात्रोऽसावुत्तरो मनः पूर्वो वागुत्तरः प्राणः पूर्वोऽपान उत्तरः प्ररोधनं पूर्वं उदयनमुत्तरो ज्योतिष्टोमो वैश्वानरोऽतिरात्रो भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्य।

तः । असौ । उत्तर इत्युत्-तरः । मनः । पूर्वः । वाक् । उत्तर इत्युत्-तरः । प्राण इति प्र-अनः । पूर्वः । अपान इत्यप-अनः । उत्तर इत्युत्-तरः । प्ररोधनमिति प्र-रोधनम् । पूर्वः । उदयनमित्युत्-अयनम् । उत्तर इत्युत्-तरः । [6]ज्योतिष्टोम इति ज्योतिः-स्तोमः । वैश्वानरः । अतिरात्र इत्यति-रात्रः । भवति । ज्योतिः । एव । पुरस्तात् । दधते । सुवर्गस्येति सुवः-गस्य । लोकस्य । अनुख्यात्या इत्यनु-ख्यात्यै । [7]चतुर्विंश इति चतुः-

---

प्रायणीयोतिरात्रः । असौ द्यौरुत्तर उदयनीयोतिरात्रः । मनः पूर्व इति । पूर्वोत्तरत्वसाम्यात् । प्राणः पूर्व इति । प्रथमचरमसाम्यात् । प्ररोधनं परिग्रहः । उदयनमुत्थानम् ॥

[6]ज्योतिष्टोम इत्यादि ॥ गतम् । प्रायणीयस्येदं लक्षणम् ॥

[7]चतुर्विंश इत्यादि ॥ प्रायणीयानन्तरमारम्भणीयश्चतुर्विंश उक्थ्यः कार्य इत्यर्थः । प्रयन्त एवेति । प्रयन्त एव आरभमाणा

स्यानुख्यात्यै चतुर्विँ॒शः प्रायणीयो भवति चतुर्विँशतिरर्धमासाः ॥ ३ ॥ संवथ्सरः प्रयन्त एव संवथ्सरे प्रति तिष्ठन्ति तस्य त्रीणि च शतानि षष्टिश्च स्तोत्रीयास्तावतीस्संवथ्सरस्य रात्रय उभे एव सं-

विँ॒शः । प्रायणीय इति प्र-अयनीयः । भवति । चतुर्विँशतिरिति चतुः-विँ॒शतिः । अर्धमासा इत्यर्ध-मासाः ॥ ३ ॥ संवत्सर इति सं-वत्सरः । प्रयन्त इति प्र-यन्तः । एव । संवत्सर इति सं-वत्सरे । प्रतीति । तिष्ठन्ति । तस्य । त्रीणि । च । शतानि । षष्टिः । च । स्तोत्रीयाः । तावतीः । संवत्सरस्येति सं-वत्सरस्य । रात्रयः । उभे इति । एव । संवत्सरस्येति सं-वत्सरस्य । रूपे इति ।

एव संवत्सरे प्रतितिष्ठन्ति समस्तसंवत्सरोऽत्रैव समापितो भवति । तस्येत्यादि । उक्थ्यस्य पञ्चदश स्तोत्राणि तानि च सर्वाणि चतुर्विंशानि । पञ्चदशानां चतुर्विंशतेश्च संवर्गः षष्ट्यधिकं शतत्रयम् । तावत्यः संवत्सरस्य रात्रय इति । उभे एवेति । चतुर्विंशत्वेन अर्धमासानामाभिरूप्यं स्तोत्रियाभिरह्नामाभिरूप्यमित्यादि । प्रारम्भ एव प्राप्तस्य संवत्सरस्य समाप्त्यर्थमविनाशार्थं च उत्तरैरहोभिश्च-

वथ्सरस्यं रूपे आंप्नुवन्ति ते सङ्ं-
स्थित्या अरिष्ट्या उत्तरैरहोभिश्च-
रन्ति षडहा भंवन्ति षड्वा ऋतवं-
स्संवथ्सर ऋतुष्वेव संवथ्सरे प्रति
तिष्ठन्ति गौश्चायुश्च मध्यतस्तोमौ
भवतस्संवथ्सरस्यैव तन्मिथुनं मं-

आप्नुवन्ति । ते । सङ्ंस्थित्या इति सं–स्थित्यै । अरिष्ट्यै । उत्तरैरित्युत्–तरैः । अहोभिरित्यहः–भिः । चरन्ति । [4]षडहा इति षट्–अहाः । भवन्ति । षट् । वै । ऋतवः । संवत्सर इति सं–वत्सरः । ऋतुषु । एव । संवत्सर इति सं–वत्सरे । प्रतीति । तिष्ठन्ति । गौः । च । आयुः । च । मध्यतः । स्तोमौ । भवतः । संवत्सरस्येति सं–वत्सरस्य । एव ।

---

रन्ति प्रारब्धस्य समाप्तिरेतावता भवतीति । यद्वा—संस्थित्यै संस्थित्याः संस्थायां अत्रैव लब्धाया अविनाशार्थमुत्तरैरहोभिः चरन्ति । षष्ठ्यर्थे चतुर्थी ॥

[4]षडहा इति ॥ चत्वारोभिप्लवा इत्युक्तम् । स्तुत्यर्थं पुनर्वचनम् । गौश्चायुश्चेति । तेषु षडहेषु ज्योतिषां मध्ये गोआयुषी उक्थ्यौ भवतः स्तोमविशेषवन्तौ स्तोमौ । उक्थ्यस्यैव पुनर्वचनं स्तुत्यर्थम् । संवत्सरस्यैवेत्यादि । संवत्सरस्यैव मध्ये पुनःपुनः भ-

ध्यतः ॥ ४ ॥ दधाति प्रजननाय ज्योतिरभितो भवति विमोचनमेव तच्छन्दाꣳस्येव तद्विमोकं यन्त्यथो उभयतोज्योतिषैव षडहेन सुवर्गं लोकं यन्ति ब्रह्मवादिनो वदन्त्या-

तत् । मिथुनम् । मध्यतः ॥ ४ ॥ दधाति । प्रजननायेति प्र-जननाय । ज्योतिः । अभितः । भवन्ति । विमोचनमिति वि-मोचनम् । एव । तत् । छन्दाꣳसि । एव । तत् । विमोकमिति वि-मोकम् । यन्ति । अथो इति । उभयतोज्योतिषेत्युभयतः-ज्योतिषा । एव । षडहेनेति षट्-अहेन । सुवर्गमिति सुवः-गम् । लोकम् । यन्ति । [9]ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । आसते ।

---

वेशितं तत् मिथुनं प्रजननाय प्रजानां भवति । ज्योतिरभित इति । आदौ अन्ते च षडहस्य । विमोचनमेव तदिति । ज्योतिर्नाम विमोचनमिति । तेन छन्दांसि विमोकं ततो विमुच्य विस्रस्य यन्ति गच्छन्ति सत्रिणः । अथो इत्यादि । उभयतोज्योतिष्टेनातिप्रकाशत्वात् स्वर्गं प्राप्नुवन्ति ॥

[9]ब्रह्मवादिन इत्यादि ॥ आसते अमी सत्रिणः तेऽमी केन पथा यन्तीति ब्रह्मवादिनः पर्यनुयोगं वदन्ति । तत्र देवयानेन पथा

संते केन यन्तीति देवयानेन पथेति
ब्रूयाच्छन्दाꣳसि वै देवयानः पन्था
गायत्री त्रिष्टुब्जगती ज्योतिर्वै गा-
यत्री गौस्त्रिष्टुगायुर्जगती यदेते स्तो-
मा भवन्ति देवयानेनैव ॥ ५ ॥ त-
त्पथा यन्ति समानꣳ साम भव-

केन । यन्ति । इति । देवयानेनेति देव–यानेन । पथा । इति । ब्रूयात् । छन्दाꣳसि । वै । देवयान इति देव–यानः । पन्थाः । गायत्री । त्रिष्टुप् । जगती । ज्योतिः । वै । गायत्री । गौः । त्रिष्टुक् । आयुः । जगती । यत् । एते । स्तोमाः । भवन्ति । देवयानेनेति देव–यानेन । एव ॥५॥ तत् । पथा । यन्ति । [10]समानम् । साम । भवति । देवलोक

यन्ति आसीना एव गच्छन्तीत्युत्तरं ब्रूयात् तेषाम् । देवा येन यन्ति स देवयानः पन्थाः देवयोग्यो मार्गः । छन्दांसीत्यादि । गतम् । ज्योतिर्वा इत्यादि । त्रीण्येवैतान्यहानि आवृत्त्या संवत्सरं प्रीणयन्ति । एतानि च गायत्र्याद्यात्मकानि । गायत्र्यादयश्च देवानां पन्था इति आसीना एवामी अनेन पथा स्वर्गं यन्तीति ॥

[10]समानमित्यादि ॥ एकमेव साम भवति रथन्तरं वा बृहद्वा सर्वेष्वहस्सु । तस्यैकत्वात्तदात्मनो देवलोकान्न यन्ति न गच्छन्ति

ति देवलोको वै साम देवलोकादेव न यन्त्यन्याअन्या ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेवान्यमन्यं देवलोकमभ्यारोहन्तो यन्त्यभिवर्तो ब्रह्मसामं भव-

इति देव-लोकः । वै । साम । देवलोकादिति देव-लोकात् । एव । न । यन्ति । अन्याअन्या इत्यन्याः-अन्याः । ऋचः । भवन्ति । मनुष्यलोक इति मनुष्य-लोकः । वै । ऋचः । मनुष्यलोकादिति मनुष्य-लोकात् । एव । अन्यमन्यमित्यन्यं-अन्यम् । देवलोकमिति देव-लोकम् । अभ्यारोहन्त इत्यभि-आरोहन्तः । यन्ति । [11]अभिवर्त इ-

कदाचिदपि न वियुज्यन्ते । अन्याअन्या इत्यादि । साम्नो योनिभूता ऋचोन्याअन्या भवन्ति ऋचः प्रत्यहं भिद्यन्ते । तासां च भेदात्तदात्मकात् मनुष्यलोकादन्यस्माच्च देवलोकमेवाभिमुख्येन आरोहन्तो यन्ति गच्छन्ति । व्यत्ययेन पञ्चम्यर्थे द्वितीया । यद्वा—मनुष्यलोकान्नानासुकृतसाधनमनुष्यलोकवशात्तदनुरूपमन्यमन्यं देवलोकमेव प्राप्नुवन्ति न कदाचिद्देवलोकेन वियुज्यन्त इति ॥

[11]उक्तं समानं साम भवतीति ; किं पुनस्तत्सामेत्याह—अभिवर्त इति ॥ अभिवर्ताख्यं ब्रह्मण एव साम* भवति भिन्नान्ये-

*एव समानं.

ति सुवर्गस्यं लोकस्याभिवृत्त्या अ-
भिजिद्भवति सुवर्गस्यं लोकस्याभि-
जित्यै विश्वजिद्भवति विश्वस्य जि-
त्यै मासिमासि पृष्ठान्युप यन्ति
मासिमास्यतिग्राह्यां गृह्यन्ते मासि-

त्यभि—वर्तः । ब्रह्मसामेति ब्रह्म—सामम् । भव-ति । सुवर्गस्येति सुवः—गस्यं । लोकस्यं । अभि-वृत्या इत्यभि—वृत्यै । [12]अभिजिदित्यभि—जित् । भवति । सुवर्गस्येति सुवः—गस्यं । लोकस्यं । अभिजित्या इत्यभि—जित्यै । विश्वजिदिति वि-श्व—जित् । भवति । विश्वस्य । जित्यै । मासिमा-सीति मासि—मासि । पृष्ठानि । उपेति । यन्ति । मासिमासीति मासि—मासि । अतिग्राह्या इत्य-

---

वान्यानि सामानि । कश्चिदाह—अभिवर्तत्वं ब्रह्मसाम्नोऽनेन विधी-यते । सर्वत्रैव साम्न ऐक्यमिति । अभिवृत्त्या इति । सुवर्गस्य आभिमुख्येन प्राप्त्यर्थम् ॥

[12]अभिजिदित्यादि ॥ अभिजिद्विश्वजितोर्विधिः । पूर्वस्मिन्पक्षे परस्सान्नामधस्तात् अभिजिदुत्तरस्मिन्पक्षे स्वरसाम्नामुपरिष्टाद्विश्वजित् । मासिमासि पृष्ठानीति । न कश्चिदपि मासः पृष्ठशून्यः कार्यः । मासिमास्यतिग्राह्या इति । आग्नेयैन्द्रसौर्याः । अत्र नियमार्थं

मास्येव वीर्यं दधाति मासां प्रतिष्ठि-
त्या उपरिष्टान्मासां पृष्ठान्युप य-
न्ति तस्मादुपरिष्टादोषधयः फलं
गृह्णन्ति ॥ ६ ॥
गावो वा एतथ्सत्रमासताशृङ्गास्स-

ति–ग्राह्याः । गृह्यन्ते । मासिमासीति मासि–मा-
सि । एव । वीर्यम् । दधाति । मासाम् । प्रतिष्ठि-
त्या इति प्रति–स्थित्यै । उपरिष्टात् । मासाम् ।
पृष्ठानि । उपेति । यन्ति । तस्मात् । उपरिष्टात् ।
ओषधयः । फलम् । गृह्णन्ति ॥ ६ ॥

गोसत्रं वा एति संवत्सरोर्धमासा मिथुनं मं-
ध्यतो देवयानेनैव वीर्यं त्रयोदश च ॥ १ ॥

[1]गावः । वै । एतत् । सत्रम् । आसत । अशृ-

---

वचनम् । उपरिष्टादिति । क्वचित् चतुर्विंशादह्नः पराणि क्वचि-
दष्टादशात् । तस्मादित्यादि । गतम् ॥

इति सप्तमे पञ्चमे प्रथमोनुवाकः.

---

[1]पुनरपि गवामयनस्यैव विशेषं दर्शयति—गाव इत्यादि ॥ ग-
तम्* । सिषासन्तीः सिषासन्त्यः लब्धुमिच्छन्त्यः । सनोतेः 'ज-

---

*सं. ७-५-१.

तीरश्शृङ्गाणि सिषासन्तीस्तासां द-
श मासा निषण्णा आसन्नथ शृ-
ङ्गाण्यजायन्त ता अब्रुवन्नरात्स्मो-
त्तिष्ठामाव तं काममरुत्स्महि येन
कामेन न्यषदामेति तासामु त्वा

ङ्गाः । सतीः । शृङ्गाणि । सिषासन्तीः । तासाम् । दश । मासाः । निषण्णा इति नि-सन्नाः । आसन् । अथ । शृङ्गाणि । अजायन्त । ताः । अब्रुवन् । अरात्स्म । उदिति । तिष्ठाम । अवेति । तम् । कामम् । अरुत्स्महि । येन । कामेन । न्यषदामेति नि-असदाम । इति । [2]तासाम् । उ । तु । वै । अब्रुवन् । अर्धाः । वा । यावतीः । वा । आसां-

नसनखनाम्' इत्यात्वम्, 'सुपां सुलुक्' इति पूर्ववत् सवर्णदीर्घत्वम् । ता अब्रुवन्निति । दशमासव्यपगमे जातशृङ्गाः सर्वा गावोऽब्रुवन्; कथं?—अरात्स्म ऋद्धिं गता वयं, उत्तिष्ठामेदानीमभिमतं काममवारुत्स्महि लब्धवत्यो वयं शृङ्गजन्मात्मकं येन कामेन न्यषदाम आसिष्महे, नास्त्येवान्योऽस्माकं कामः, तत उत्तिष्ठाम इति ॥

[2]तासामु त्वा इत्यादि ॥ उ तु वै इति त्रयो निपाताः अवधारणविशेषप्रसिद्धिषु । तासामेव तु मध्ये अर्धा ऋद्धाः शृङ्ग-

अब्रुवन्नर्धा वा यावतीर्वाऽऽसामहा एवेमौ द्वादशौ मासौ संवथ्सरꣳ संपाद्योत्तिष्ठामेति तासाम् ॥ ७॥ द्वादशे मासि शृङ्गाणि प्रावर्तन्त श्रद्ध-

महै । एव । इमौ । द्वादशौ । मासौ । संवत्सरमिति सं—वत्सरम् । संपाद्येति सं—पाद्य । उदिति । तिष्ठाम । इति । तासाम् ॥ ७ ॥ द्वादशे । मासि । शृङ्गाणि । प्रेति । अवर्तन्त । श्रद्धयेति श्रत्—धया । वा । अश्रद्धयेत्यश्रत्—धया । वा ।

---

कामाः जातशृङ्गाः ताश्चाब्रुवन् । चार्थे वाशब्दः । ऋधेर्निष्ठायां छान्दसो गुणः । यावतीर्वा स्वयं भावानतिरेकिण्यः यावत्यश्च अन्याः शृङ्गकामाः किमेभिरुत्थितैरिति । अत एव जातशृङ्गाः ताश्चाब्रुवन् । कथमब्रुवन् । यद्वा—अर्धा एकादशा यावतीर्वा सर्वा आसामहा इत्यर्थः । आसामहा एव इमौ द्वादशौ मासौ नोत्तिष्ठाम इति इमावप्यासित्वा संपाद्योत्तिष्ठामेति । द्वादशानां पूर्णौ द्वादशौ सत्सु हि द्वादशसु द्वादशापि द्वादशाः । अत्रेदं चिन्त्यम्—दशसु मासेषु या जातशृङ्गाः ता द्वादशौ मासौ पुनः किमर्थमासतेति । अथ यास्त्वशृङ्गकामाः ता अस्मादेव दशमासानासीनाः पुनरपि द्वादशौ मासौ कस्मादेवासत इति । अयं भावः—जातशृङ्गा अपि शृङ्गश्रद्धया शृङ्गगुणान् कामयन्तेस्म प्रथमाः । उत्तरास्तु अन्यदेव किंचित् श्रेयः कामयन्तेस्म न शृङ्गेषु तासां श्रद्धेति । तदिदमुभयमपि स्वयमेव स्पष्टीकरोति—तासां

या वाऽश्रद्धया वा ता इमा यास्तू-
परा उभय्यो वाव ता आर्ध्नुवन् या-
श्च शृङ्गाण्यसन्वन् याश्चोर्जमवारु-
न्धतर्ध्नोति दशसु मास्सूत्तिष्ठन्नृध्नोति

ताः । इमाः । याः । तूपराः । उभय्यः । वाव । ताः । आर्ध्नुवन् । याः । च । शृङ्गाणि । असन्वन् । याः । च । ऊर्जम् । अवारुन्धतेत्यव–अरुन्धत । ऋध्नोति । दशस्विति दश–सु । मासु । उत्तिष्ठन्नित्युत्–तिष्ठन् । ऋध्नोति । द्वादशस्विति द्वादश–

द्वादश इत्यादि । अत्र या दशमासानासित्वा जातशृङ्गा उत्थिताः ता विरूपशृङ्गा आसन् । अथ या द्वादशावपि मासावासत तासां द्वादशे मासि समाप्ते संवत्सरे शृङ्गाणि प्रावर्तन्त प्रकृष्टरूपाण्यभवन् । अथ यासां श्रद्धा आसामहा एवेमौ द्वादशाविति तासां या श्रद्धा हेतुभूता शृङ्गविषया तया हेतुभूतयेत्यर्थः । अथ या अशृङ्गकामा द्वादशौ मासावासते ता इमा अभवन् यास्तूपरा उच्यन्ते । अत्र हेतुरश्रद्धयेति । शृङ्गश्रद्धाया अभावात् तूपरा अभवन्निति । अत्रापि वाशब्दः समुच्चये । श्रद्धया च अश्रद्धया चेत्यर्थः । तासामभवदिति । उपसंहरति—उभय्य इति । द्विप्रकारा अपि ता आर्ध्नुवन् ऋद्धिं गताः याश्च शृङ्गाण्यसन्वन् समभजन्त याश्चोर्जमलभन्तेति । ऋध्नोतीत्यादि । विदुषः फलम् । उभयनिमित्ताऽपि तस्य सिद्धिर्भवतीति । 'पद्दन्' इत्यादिना मासादेशे अन्त्यलोपश्छान्दसः ॥

द्वादशसु य एवं वेद पदेन खलु वा एते यन्ति विन्दति खलु वै पदेन यन्तद्वा एतदृद्धमयनं तस्मादेतद्गोसनि ॥ ८ ॥

सु । यः । एवम् । वेद । [3]पदेन । खलु । वै । एते । यन्ति । विन्दति । खलु । वै । पदेन । यन् । तत् । वै । एतत् । ऋद्धम् । अयनम् । तस्मात् । एतत् । गोसनीति गो—सनि ॥ ८ ॥

तिष्ठामेति तासां तस्माद्वे च ॥ २ ॥

---

[3]ननु युक्तं द्वादशसु मासेषु ऋध्नुवन्तीति, संवत्सरस्याविकलमनुष्ठितत्वात् । कथं दशसु मासेषु ऋध्नुयुरित्याह—पदेनेत्यादि ॥ पदेन मार्गेण खल्वेते यन्ति वर्तन्ते । पदेन हि यन् गच्छन् सत्स्वपि स्खलितेषु विन्दति लभतेऽभिमतम् । किंच—तदेतत्खल्वयनं संवत्सरात्मकं ऋद्धं सर्वेणापि प्रकारेण ऋद्धिकृत् एवं दशमास्यप्येतद्विहितं भवति । तस्मादेतद्गोसनि गवामप्यविकल्पेनाभिमतस्य लम्भयितृ 'छन्दसि वनसन' इतीन्प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् ॥

इति सप्तमे पञ्चमे द्वितीयोनुवाकः.

प्रथमे मासि पृष्ठान्युप यन्ति म-
ध्यम उप यन्त्युत्तम उप यन्ति त-
दाहुर्यां वै त्रिरेकस्याह्न उपसीदन्ति
दह्नं वै साऽपराभ्यां दोहाभ्यां दुहेऽ-
थ कुतस्सा धोक्ष्यते यां द्वादश कृत्व

[1]प्रथमे । मासि । पृष्ठानि । उपेति । यन्ति । मध्यमे । उपेति । यन्ति । उत्तम इत्युत्–तमे । उपेति । यन्ति । तत् । आहुः । याम् । वै । त्रिः । एकस्य । अह्नः । उपसीदन्तीत्युप–सीदन्ति । दह्नम् । वै । सा । अपराभ्याम् । दोहाभ्याम् । दुहे । अथ । कुतः । सा । धोक्ष्यते । याम् । द्वादश । कृत्वः । उपसीदन्तीत्युप–सीदन्ति । इति । संवत्सरमिति

[1]उक्तं मासिमासि पृष्ठोपेतं दशमास्यं द्वादशमास्यं च द्विप्रकारं गवामयनम् । इदानीं तृतीयं प्रस्तूयते—प्रथम इत्यादि ॥ प्रथममध्यमोत्तमेष्वेव मासेषु पृष्ठान्युपेयुरिति । अथैतत्तृतीयदूषणेन चतुर्थं दर्शयति—तदाहुरिति । तत् तदर्थं यां गामेकस्याह्नस्त्रिरुपसीदन्ति दुहन्ति सा अपराभ्यां द्वितीयतृतीयाभ्यां दह्नमल्पमेव क्षीरं दुहे दुग्धे हरति यदेवं सा कुतो धोक्ष्यते यां सत्रधेनुं द्वादशकृत्व उपसीदन्ति न किंचिदपि सा दुग्धे । तस्मादभिप्लवैरेव संवत्सरं संपाद्य उत्तमे मासि सकृत्पृष्ठान्युपेयुः । ततो यजमानाः यज्ञं धेनुस्थानीयं पशूंश्च तत्क्षीरस्थानीयानवरुन्धते । दुह इति कर्म-

उपसीदन्तीति संवथ्सरꣳ संपाद्यो-
त्तमे मासि सकृत्पृष्ठान्युपेयुस्तद्यज-
माना यज्ञं पशूनव रुन्धते समुद्रं वै
॥ १ ॥ एतेऽनवारमपारं प्र प्लवन्ते
ये संवथ्सरमुपयन्ति यद्बृहद्रथन्तरे
अन्वर्जेयुर्यथा मध्ये समुद्रस्य प्लवम-

सं–वत्सरम् । संपाद्येति सं–पाद्य । उत्तम इत्यु-त्–तमे । मासि । सकृत् । पृष्ठानि । उपेति । इ-युः । तत् । यजमानाः । यज्ञम् । पशून् । अवेति । रुन्धते । [2]समुद्रम् । वै ॥ १ ॥ एते । अन-वारम् । अपारम् । प्रेति । प्लवन्ते । ये । संवत्स-रमिति सं–वत्सरम् । उपयन्तीत्युप–यन्ति । यत् । बृहद्रथन्तरे इति बृहत्–रथन्तरे । अन्वर्जे-युरित्यनु–अर्जेयुः । यथा । मध्ये । समुद्रस्य । प्लु-

---

कर्तरि 'न दुहस्नुनमाम्' इति यगभावः । 'लोपस्त' इत्या-दिना तलोपः ॥

[2]समुद्रं वा इत्यादि ॥ परागर्वाक्तीरे पारावारौ, ताभ्यां रहितं समुद्रमेते प्रप्लवन्ते ये संवत्सरमुपयन्ति । अगाधं अपारमित्येके । तत्र यद्बृहद्रथन्तरे अन्वर्जेयुः अविच्छेदेन स्वीकुर्युः तत्समुद्रस्य मध्ये प्लवस्वीकरणसदृशं वेदितव्यम् । अर्ज आर्जने, तस्मात् अनु-

न्वर्जैयुस्तादृक्तदनुंत्सर्गं बृहद्रथन्त-
राभ्यांमित्वा प्रतिष्ठां गच्छन्ति स-
र्वेभ्यो वै कामेभ्यस्सन्धिर्दुहे तद्यज-
मानास्सर्वान्कामानवं रुन्धते ॥१०॥

वम् । अन्वर्जैयुरित्यंनु–अर्जैयुः । तादृक् । तत् । अनुंत्सर्गमित्यनुंत्–सर्गम् । बृहद्रथन्तराभ्यामिति बृहत्–रथन्तराभ्याम् । इत्वा । प्रतिष्ठामिति प्रति–स्थाम् । गच्छन्ति । [3]सर्वेभ्यः । वै । कामेभ्यः । सन्धिरिति सं–धिः । दुहे । तत् । यजमानाः । सर्वान् । कामान् । अवेति । रुन्धते ॥१०॥

समुद्रं वै चतुस्त्रिꣳशच्च ॥ ३ ॥

---

त्सर्गमनुत्सृज्य छान्दसो णमुल् । अनुत्सृष्टबृहद्रथन्तरप्लवा एव ताभ्यां इत्वा संवत्सरं समुद्रं समतीत्य प्रतिष्ठां गच्छन्ति ॥

[3]सर्वेभ्य इत्यादि ॥ सन्धिः सकृद्दोह्या गौः न पुनःपुनर्दोह्या । सन्धिर्हि सर्वेभ्यः कामेभ्यः पर्याप्तं क्षीरं दुहे दुग्धे; तद्वत्सत्रधेनुरपि सकृत्पृष्ठोपयानेन सन्धिसदृशी सकृदेव सर्वान्कामान् दुग्धे । तस्माद्दोहनस्थानीयं पृष्ठोपयानं सकृत्कुर्वन्तो यजमानाः सर्वान्कामानवरुन्धत इति । अन्य आहुः—अन्यवत्सदोह्या गौः सन्धिरिति । सा हि सर्वकामपर्याप्तं क्षीरं पुनर्दोहेन क्षरति तद्वत्सत्रसन्धिरपि अन्यवत्सस्थानीयाभ्यां बृहद्रथन्तराभ्यामनुत्सर्गेण दुह्यमाना सर्वान् कामान् प्रयच्छतीति ॥

इति सप्तमे पञ्चमे तृतीयोनुवाकः

समान्यं ऋचो भवन्ति मनुष्यलोको
वा ऋचो मनुष्यलोकादेव न यं-
न्त्यन्यदन्यथ्सामं भवति देवलोको
वै सामं देवलोकादेवान्यमन्यं मनु-
ष्यलोकं प्रत्यवरोहन्तो यन्ति ज-

[1]समान्यः । ऋचः । भवन्ति । मनुष्यलोक इ-ति मनुष्य–लोकः । वै । ऋचः । मनुष्यलोकादि-ति मनुष्य–लोकात् । एव । न । यन्ति । अन्य-दन्यदित्यन्यत्–अन्यत् । सामं । भवति । देवलो-क इति देव–लोकः । वै । सामं । देवलोकादिति देव–लोकात् । एव । अन्यमन्यमित्यन्यं–अन्यम् । मनुष्यलोकमिति मनुष्य–लोकम् । प्रत्यवरोहन्त

[1]अथोत्तरस्मिन् पक्षसि विशेष उच्यते—समान्य इत्यादि ॥ समान्यः एकाः । 'केवलमामक' इति ङीप्, 'उदात्तस्वरितयोः' इति विभक्तिस्स्वर्यते । ता एव ऋचो न पृथक् ग्राह्याः । उत्तरस्मिन् पक्षसि मनुष्यलोकादेव न यन्ति अपत्यादिसन्तानविच्छेदेन । अन्यदन्यदित्यादि । बहवो देवलोकाः, तत्र सामतः तस्मात्* देवलोकात् इष्टं मनुष्यलोकं प्रत्यवरोहन्त एव यन्ति उपयन्ति सत्रम् ॥

*तत्र सर्वस्मात्

गतीमग्र उप यन्ति जगतीं वै छ-
न्दाꣳसि प्रत्यवरोहन्त्याग्रयणं ग्रहा
बृहत्पृष्ठानि त्रयस्त्रिꣳशꣳ स्तोमा-
स्तस्माज्ज्यायाꣳसं कनीयान्प्रत्यव-
रोहति वैश्वकर्मणो गृह्यते विश्वा-
न्येव तेन कर्माणि यजमाना अव

इति प्रति-अवरोहन्तः । यन्ति । [2]जगतीम् । अ-ग्रे। उपेति । यन्ति । जगतीम् । वै । छन्दाꣳसि । प्रत्यवरोहन्तीति प्रति-अवरोहन्ति । आग्रयणम् । ग्रहाः । बृहत् । पृष्ठानि । त्रयस्त्रिꣳशमिति त्रयः-त्रिꣳशम् । स्तोमाः । तस्मात् । ज्यायाꣳसम् । कनीयान् । प्रत्यवरोहतीति प्रति-अवरोहति । [3]वै-श्वकर्मण इति वैश्व-कर्मणः । गृह्यते । विश्वानि ।

---

[2]जगतीमग्र इति ॥ विस्पष्टम् । अत ऊर्ध्वमुत्तरस्मिन् पक्षस्यह्नां परावृत्तत्वात् जगतीं वै छन्दांसि प्रत्यवरोहन्ति तदभिमुखं न्यग्भावेन गच्छन्ति । आग्रयणं ग्रहाः प्रत्यवरोहन्तीत्येव । आग्रयणाग्रत्वात् ग्रहाणाम् । बृहत् प्रत्यवरोहन्ति पृष्ठानि सामानि तत्प्रधानत्वात् । त्रयस्त्रिंशं प्रत्यवरोहन्ति स्तोमाः ततो न्यूनत्वात् । तस्मादित्यादि । गतम् । ज्यायांसं कनीयान् प्रत्यवरोहति ॥

[3]वैश्वकर्मणोतिग्राह्यो गृह्यते आदित्यश्च । अन्योन्य इति । एकैकस्य गृह्यते आमहाव्रतात् महाव्रते सहगृह्येते ॥

रुन्धत आदित्यः ॥ ११ ॥ गृह्यत इयं वा अदितिरस्यामेव प्रति तिष्ठन्त्यन्योन्यो गृह्येते मिथुनत्वाय प्रजात्या अवान्तरं वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमाना-

एव । तेन । कर्माणि । यजमानाः । अवेति । रुन्धते । आदित्यः ॥ ११ ॥ गृह्यते । इयम् । वै । अदितिः । अस्याम् । एव । प्रतीति । तिष्ठन्ति । अन्योन्य इत्यन्यः-अन्यः । गृह्येते इति । मिथुनत्वायेति मिथुन-त्वाय । प्रजात्या इति प्र-जात्यै । [4]अवान्तरमित्यव-अन्तरम् । वै । दशरात्रेणेति दश-रात्रेण । प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र-जाः । असृजत । यत् । दशरात्र इति दश-रात्रः । भवति । प्रजा इति प्र-जाः । एव ।

[4]अवान्तरं वा इत्यादि ॥ व्याख्यातं ' द्वे वाव '* इत्यत्र द्वादशाहियो दशरात्रोपि† विधीयते । समाप्तं गवामयनम् ॥

इति सप्तमे पञ्चमे चतुर्थोनुवाकः.

*सं. ७-४-५. †द्वादशाहो.

स्सृजन्त एताꣳ ह वा उदङ्कश्शौल्बायनस्सत्रस्यर्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्द्ध्या अथो यदेव पूर्वेष्वहस्सु विलोम क्रियते तस्यैवैषा शान्तिः ॥ १२ ॥
यदि सोमौ सꣳसुतौ स्यातां महति रात्रियै प्रातरनुवाकमुपाकुर्यात्पूर्वो

तत् । यजमानाः । सृजन्ते । एताम् । ह । वै । उदङ्कः । शौल्बायनः । सत्रस्य । ऋद्धिम् । उवाच । यत् । दशरात्र इति दश—रात्रः । यत् । दशरात्र इति दश—रात्रः । भवति । सत्रस्य । ऋद्ध्यै । अथो इति । यत् । एव । पूर्वेषु । अहस्स्वित्यहः—सु । विलोमेति वि—लोम । क्रियते । तस्य । एव । एषा । शान्तिः ॥ १२ ॥

आदित्यस्तस्यै व द्वे चे ॥ ४ ॥

[1]यदि । सोमौ । सꣳसुताविति सं—सुतौ । स्याताम् । महति । रात्रियै । प्रातरनुवाकमिति प्रातः—

[1]अथ सत्रमेवाधिकृत्य किंचिदुच्यते—यदि सोमावित्यादि ॥ यदि सोमौ सोमयागौ गोसत्रात्मकौ सन्तौ संसुतौ समारब्धौ स्यातां

वाचं पूर्वां देवताः पूर्वश्छन्दाꣳसि वृ-
ङ्क्ते वृषण्वतीं प्रतिपदं कुर्यात्प्रातस्स-
वनादेवैषामिन्द्रं वृङ्क्तेऽथो खल्वाहु-
स्सवनमुखेसंवनमुखे कार्येति सव-
नमुखात्संवनमुखादेवैषामिन्द्रं वृङ्क्ते

अनुवाकम् । उपाकुर्यादित्युप–आकुर्यात् । पूर्वः । वाचम् । पूर्वः । देवताः । पूर्वः । छन्दाꣳसि । वृङ्क्ते । [2]वृषण्वतीमिति वृषण्–वतीम् । प्रतिपदमिति प्रति–पदम् । कुर्यात् । प्रातस्सवनादिति प्रातः–सवनात् । एव । एषाम् । इन्द्रम् । वृङ्क्ते । अथो इति । खलु । आहुः । सवनमुखेसंवनमुख इति सवनमुखे–सवनमुखे । कार्या । इति । सवनमु-

महति रात्रियै । उभयत्र व्यत्ययः लिङ्गस्य च वचनस्य । महत्यां रात्रौ इति 'बृहन्महतोरुपसङ्ख्यानम्' इति महतो विभक्तिरुदात्ता । महारात्रि उपोत्थाय प्रातरनुवाकमुपाकुर्यात् । यो हि पूर्वमुपाकरोति स इतरस्य वागादीन् वृङ्क्ते आदत्ते ॥

[2]वृषण्वतीमिति ॥ वृषशब्दवतीमृचं बहिष्पवमानस्य प्रतिपदं प्रारम्भं कुर्यात् प्रातस्सवनादेव एषां प्रत्यर्थिनां यजमानानामिन्द्रियं वृङ्क्ते आत्मसात् करोति । एषामिति । लिङ्गात् सत्रविषयमेतदिति जानीमः । वृषशब्दान्मतुप् अनो नुट् । अथो खल्वाहुः सवनमुखे-

संवेशायोपवेशाय गायत्रियास्त्रिष्टु-
भो जगत्या अनुष्टुभः पङ्क्त्या अभि-
भूत्यै स्वाहा छन्दाꣳसि वै संवेश
उपवेशश्छन्दोभिरेवैषाम् ॥१३॥ छ-
न्दाꣳसि वृङ्क्ते सजनीयꣳ शस्यं वि-

खात्सवनमुखादिति सवनमुखात्—सवनमुखात् । एव । एषाम् । इन्द्रम् । वृङ्क्ते । [3]संवेशायेति सं—वेशाय । उपवेशायेत्युप—वेशाय । गायत्रियाः । त्रिष्टुभः । जगत्याः । अनुष्टुभ इत्यनु—स्तुभः । पङ्क्त्याः । अभिभूत्या इत्यभि—भूत्यै । स्वाहा । छन्दाꣳसि । वै । संवेश इति सं—वेशः । उपवेश इत्युप—वेशः । छन्दोभिरिति छन्दः—भिः । एव ।

---

सवनमुखे त्रयाणामपि सवनानामारम्भे प्रतिपदियं कार्येति सर्वस्मात्सवनमुखादेषां सम्बन्धिनमिन्द्रं इन्द्रियं वृङ्क्ते ॥

[3]संवेशायेत्यादिरभिभूतिहोममन्त्रोव्याख्यातप्रायः ‘ इष्टर्गः ’ * इत्यत्र ॥ छन्दांसि वा इत्यादि ब्राह्मणं च तत्रैव व्याख्यातप्रायम् * । तत्त्वेकाहादिविषयम् । इदंतु सत्त्रविषयम् । तत्र तिस्रोऽभिभूतयः, अत्र तु पञ्चेति विवेकः ॥

---

*सं. ३-१-७.

हव्यꣳ शस्यमगस्त्यस्य कयाशुभी-
यꣳ शस्यमेतावद्वा अस्ति यावदेत-
द्यावदेवास्ति तदेषां वृङ्क्ते यदि प्रात-

एषाम् ॥ १३ ॥ छन्दाꣳसि । वृङ्क्ते । [4]सजनीय-
मिति स-जनीयम् । शस्यम् । विहव्यमिति वि-
हव्यम् । शस्यम् । अगस्त्यस्य । कयाशुभीयमिति
कया-शुभीयम् । शस्यम् । एतावत् । वै । अस्ति ।
यावत् । एतत् । यावत् । एव । अस्ति । तत् ।

---

[4]सजनीयमित्यादि ॥ निष्केवल्ये 'इन्द्रस्य नु वीर्याणि प्रवोचं'* इत्यस्य स्थाने सजनीयं 'यो जात एव'† इति शस्यम् । सजनासः इति शब्दोस्मिन्नस्तीति 'मतौच्छः' इतिछः । महावैश्वदेवे 'आ नो भद्राः'‡ इत्यस्य स्थाने विहव्यं 'ममाग्ने'§ इति शस्यम् । विहवशब्दोस्मिन्वर्तत इति मत्वर्थे यत् । मरुत्वतीये 'जनिष्ठा उग्रः'¶ इत्यस्य स्थाने अगस्त्यस्य कयाशुभीयं 'कया शुभासवयसः'** इति शस्यम् । पूर्ववच्छः । एतावद्वा इत्यादि। एतावदेवं सजनीयं प्रतियष्टृणामस्ति यावदेतदनुक्रान्तम् । वागादीनि इन्द्रछन्दांसि शस्त्रविशेषाश्च यावदेवास्ति तत्सर्वमेषां वृङ्क्ते आदत्ते । एतेन ज्ञायते विद्विषाणयोः संसवो न पितापुत्रादीनामिति ॥

---

*ब्रा. २-५-४. ऋक्सं. १-३२-१. †सं. १-७-१३. ऋक्सं. २-१२-१.
‡ऋक्सं. १-८९-१. §सं. ४-७-१४. ¶ब्रा. २-८-३. ऋक्सं. १०-१२८-१.
**ऋक्सं. १-१६५-१.

स्सवने कलशो दीर्येत वैष्णवीषु
शिपिविष्टवंतीषु स्तुवीरन् यद्वै यज्ञ-
स्यांतिरिच्यते विष्णुं तच्छिपिविष्ट-
मभ्यति रिच्यते तद्विष्णुश्शिपिवि-
ष्टोतिरिक्त एवातिरिक्तं दधात्यथो
अतिरिक्तेनैवातिरिक्तमाप्त्वाऽवं रुन्धते

एषाम् । वृक्ते । [5]यदि । प्रातस्सवन इति प्रातः–स-वने । कलशः । दीर्येत । वैष्णवीषु । शिपिविष्ट-वतीष्विति शिपिविष्ट–वतीषु । स्तुवीरन् । यत् । वै । यज्ञस्य । अतिरिच्यत इत्यति–रिच्यते । वि-ष्णुम् । तत् । शिपिविष्टमिति शिपि–विष्टम् । अभि । अतीति । रिच्यते । तत् । विष्णुः । शि-पिविष्ट इति शिपि–विष्टः । अतिरिक्त इत्यति–रिक्ते । एव । अतिरिक्तमित्यति–रिक्तम् । दधा-ति । अथो इति । अतिरिक्तेनेत्यति–रिक्तेन । एव ।

---

[5]यदि प्रातस्सवन इत्यादि ॥ कलशो द्रोणकलशः यदि दीर्येत भिद्येत वैष्णवीषु शिपिविष्टशब्दवतीषु ऋक्षु स्तुवीरन् यत् यज्ञस्यातिरिच्यते प्राकृतादिदमेव साम एतद्विष्णुं शिपिविष्टमभिलक्ष्यातिरिच्यते । तस्मात्तदतिरिक्तं विष्णुः शिपिविष्टः तत्प्राधान्यात् । तस्मात् तदतिरिक्ते शिपिविष्टे विष्णावेवातिरिक्तं पुनर्गृह्यमाणं सोमं दधाति

यदि मध्यन्दिने दीर्येत वषट्कारनि-
धनꣳ साम कुर्युर्वषट्कारो वै यज्ञस्य
प्रतिष्ठा प्रतिष्ठामेवैनं गमयन्ति यदि
तृतीयसवन एतदेव ॥ १४ ॥

अतिरिक्तमित्यति–रिक्तम् । आप्त्वा । अवेति । रु-
न्धते । [6]यदि । मध्यन्दिने । दीर्येत । वषट्कारनिधन-
मिति वषट्कार–निधनम् । साम । कुर्युः । वषट्कार
इति वषट्–कारः । वै । यज्ञस्य । प्रतिष्ठेति प्रति–
स्था । प्रतिष्ठामिति प्रति–स्थाम् । एव । एनत् ।
गमयन्ति । यदि । तृतीयसवन इति तृतीय–सव-
ने । एतत् । एव ॥ १४ ॥

छन्दोभिरेवैषामेवैकान्न विꣳशतिश्च ॥ ५ ॥

---

अथो अपिच अतिरिक्तेनैव अतिरिक्तं पुनर्गृहीतं आप्त्वा अदो-
षरूपमेव शास्त्रीयमेव लब्ध्वा अवरुन्धते सत्रफलम् ॥

[6]यदि माध्यन्दिनसवने दीर्येत । कलश इत्येव । गतमन्यत् ।
प्रतिष्ठामेवैनं क्रतुं गमयति अवैकल्येन समापयति । यदि तृतीय-
सवन इत्यादि । अत्र यस्सोमः तस्य दीरणे एतदेव कुर्युः वष-
ट्कारनिधनमिति ब्राह्मणाच्छंसिनस्स्तोत्रं कुर्युरिति ॥

इति सप्तमे पञ्चमे पञ्चमोनुवाकः.

षडहैर्मासान्थ्संपाद्याहरुथ्सृजन्ति ष-
डहैर् हि मासान्थ्संपश्यन्त्यर्धमासै-
र्मासान्थ्संपाद्याहरुथ्सृजन्त्यर्धमासै-
र् हि मासान्थ्संपश्यन्त्यमावास्यया
मासान्थ्संपाद्याहरुथ्सृजन्त्यमावा-

[1]षडहैरिति षट्-अहैः । मासान् । संपाद्येति सं-पाद्य । अहः । उदिति । सृजन्ति । षडहैरिति षट्-अहैः । हि । मासान् । संपश्यन्तीति सं-पश्यन्ति । अर्धमासैरित्यर्ध-मासैः । मासान् । संपाद्येति सं-पाद्य । अहः । उदिति । सृजन्ति । अर्धमासैरित्यर्ध-मासैः । हि । मासान् । संपश्यन्तीति सं-पश्यन्ति । अमावास्ययेत्यमा-वास्यया । मासान् । संपाद्येति सं-पाद्य । अहः । उ-

---

[1]अथोत्सर्गिणामयनं प्रस्तूयते—इदं च गवामयनस्य गुणविकारः । अत्र विशेष उच्यते—षडहैरिति ॥ मासः सावनः त्रिंशद्गुणकरोदयं सावनं मासमाहुः । उक्ताष्षडहाः पृष्ठ्याभिप्लवात्मकाः । तैर्मासान् संपाद्य पूरयित्वा अनन्तरस्य मासस्य आद्यमहर्ज्योतिराख्यं उत्सृजन्ति त्यजन्ति । अत्र षडहा एव गण्यन्ते न दिवसाः । षडहैरहःपञ्चभिः मासान् संपश्यन्ति गणयित्वा जानन्ति पञ्चानां षण्णां च षडहानां संवर्गस्त्रिंशदिति । अर्धमासैरिति । द्वाभ्यामर्धमासाभ्यां पञ्चदशकाभ्यां (पञ्चम एका-

स्यया हि मासान्थ्संपश्यन्ति पौर्ण-
मास्या मासान्थ्संपाद्याहरुथ्सृजन्ति
पौर्णमास्या हि मासान्थ्संपश्यन्ति
यो वै पूर्ण आ सिञ्चति परा स सिं-
ञ्चति यः पूर्णादुदचति ॥ १५ ॥ प्रा-

दिति । सृजन्ति । अमावास्ययेत्यमा—वास्यया । हि । मासान् । संपश्यन्तीति सं—पश्यन्ति । पौर्णमास्येति पौर्ण—मास्या । मासान् । संपाद्येति सं—पाद्य । अहः । उदिति । सृजन्ति । पौर्णमास्येति पौर्ण—मास्या । हि । मासान् । संपश्यन्तीति सं—पश्यन्ति । [2]यः । वै । पूर्णे । आसिञ्चतीत्या—सिञ्चति । परेति । सः । सिञ्चति । यः । पूर्णात् ।

---

भ्या) एकमासं संपादयति । समप्रविभागे अर्धशब्दः । 'अर्धं नपुंसकम्' इति समासः । अर्धमासैर्हि मासान् संपश्यन्ति द्वाभ्यां द्वाभ्यामर्धमासाभ्यां एकैको मास इति गणयित्वा मासान् जानन्ति जनयन्ति । अत्रार्धमासावेव गण्येते, न दिवसाः अमावास्ययेति । अमावास्यामारभ्य मासस्संपाद्यः । अत्रामावास्यैव गण्यते । न दिवसादि, त्रिंशद्दिवसव्यपगमे अमावास्यान्तरापगमात् अमावास्यया मासज्ञानम् । पौर्णमास्येति । गतम् ॥

[2]यो वा इत्यादि ॥ यः पूर्णे आधारे पुनरपि आसिञ्चति प्रक्षिपति जलादि स खलु तं परासिञ्चति सेचनेन नाशयति । यस्तत

णमस्मिन्थ्स दधाति यत्पौर्णमास्या मासान्थ्संपाद्याहरुथ्सृजन्ति संवथ्सरायैव तत्प्राणं दधाति तदनु सत्रिणः प्राणन्ति यदहनोंथ्सृजेयुर्यथा दृतिरुपनद्धो विपतत्येवꣳ संवथ्सरो

उदचतीत्युंत्-अचति ॥ १५ ॥ प्राणमिति प्र-अनम् । अस्मिन् । सः । दधाति । यत् । पौर्णमास्येति पौर्ण-मास्या । मासान् । संपाद्येति सं-पाद्य । अहः । उत्सृजन्तीत्युत्-सृजन्ति । संवत्सरायेति सं-वत्सराय । एव । तत् । प्राणमिति प्र-अनम् । दधाति । तत् । अन्विति । सत्रिणः । प्रेति । अनन्ति । [3]यत् । अहः । न । उत्सृजेयुरित्युत्-सृजेयुः । यथा । दृतिः । उपनद्ध इत्युप-नद्धः ।

एवोदचाति उत्सिञ्चति उद्धरति स्तोकं सोऽस्मिन् प्राणावकाशं दधाति । तस्मात्पौर्णमास्यनन्तरमहरुत्सर्जनेन संवत्सराय प्राणावकाशं दधाति ततश्च तदनु तेनैव हेतुना सत्रिणः प्राणन्ति । 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वम् ॥

[3]यदहरित्यादि ॥ यदि यथोक्तमहर्नोत्सृजेयुः यथा दृतिरुपनद्धः पूरयित्वा बद्धः विपतति विलोडनेन क्वचिदवतिष्ठते एवं संवत्सरो विपतेत् ततश्चार्तिमार्छेयुः यजमानाः । अथाहरुत्सर्जनेन

वि पतेदार्तिमार्छेयुर्यत्पौर्णमास्या
मासान्थ्संपाद्याहरुत्सृजन्ति संवथ्स-
रायैव तदुदानं दधाति तदनु सत्रिण
उत् ॥ १६ ॥ अनन्ति नार्तिमा-
र्छन्ति पूर्णमासे वै देवाना॑ सुतो
यत्पौर्णमास्या मासान्थ्संपाद्याहरु-

विपततीति वि–पतति । एवम् । संवत्सर इति सं–वत्सरः । वीति । पतेत् । आर्तिम् । एति । ऋच्छेयुः । यत् । पौर्णमास्येति पौर्ण–मास्या । मासान् । संपाद्येति सं–पाद्य । अहः । उत्सृजन्तीत्युत्–सृजन्ति । संवत्सरायेति सं–वत्सराय । एव । तत् । उदानमित्युत्–अनम् । दधाति । तत् । अन्विति । सत्रिणः । उदिति ॥१६॥ अनन्ति । न । आर्तिम् । एति । ऋच्छन्ति । पूर्णमास इति पूर्ण–मासे । वै । देवानाम् । सुतः । यत् । पौर्णमास्येति पौ-

संवत्सरस्योदानं दधाति उच्छ्वासावकाशं कुर्वन्ति तदनुसत्रिण उदनन्ति उच्छ्वसन्ति नार्तिं गच्छन्ति । पूर्णमासे वा इत्यादि । सुतः सुत्या । प्रायेण पूर्णमासे देवानां सुत्येति यावत् * । तस्मात्पौर्णमास्युपक्रमं मासं संपाद्य अह्नः पौर्णमास्याः उत्सर्जना-

*सुत्येति साधीयान्.

थ्सृजन्ति देवानामेव तद्यज्ञेन यज्ञं प्रत्यवरोहन्ति वि वा एतद्यज्ञं छिन्दन्ति यत्षडहसंततꣳ सन्तमथाहरुत्सृजन्ति प्राजापत्यं पशुमा लभन्ते प्रजापतिस्सर्वा देवता देवताभि-

र्णी–मास्या । मासान् । संपाद्येति सं–पाद्य । अहः । उत्सृजन्तीत्युत्–सृजन्ति । देवानाम् । एव । तत् । यज्ञेन । यज्ञम् । प्रत्यवरोहन्तीति प्रति–अवरोहन्ति । वीति । वै । एतत् । यज्ञम् । छिन्दन्ति । यत् । षडहसन्ततमिति षडह–सन्ततम् । सन्तम् । अथ । अहः । उत्सृजन्तीत्युत्–सृजन्ति । प्राजापत्यमिति प्राजा–पत्यम् । पशुम् । एति । लभन्ते । प्रजापतिरिति प्रजा–पतिः । सर्वाः । देवताः । देवताभिः । एव । यज्ञम् । समिति । तन्वन्ति ।

---

देवानामेव यज्ञेन यज्ञं पृष्ठं प्रत्यवरोहन्ति देवानां यज्ञमाकृष्य यज्ञपार्श्वं प्राप्नुवन्ति । ततश्च उत्सृष्टं चानुत्सृष्टं च तदहर्भवति ॥

'वि वा एतदित्यादि ॥ एतद्धि यज्ञं विच्छिन्दन्ति यत् षडहसन्ततं षडहैरविच्छेदनेन सम्बद्धं सन्ततम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अथानन्तरभावि अहः उत्सृजन्ति यज्ञमहरुत्सर्गेण विच्छिन्दन्ति । अथ यच्चाहरुत्सृजन्ति । प्राजापत्यमित्यादि । उत्सृष्टेऽह्नि संतन्वन्ति अविच्छिन्नं कुर्वन्ति ॥

रेव यज्ञꣳ सं तन्वन्ति यन्ति वा
एते सवनाद्येऽर्हः ॥ १७ ॥ उथ्सृज-
न्ति तुरीयं खलु वा एतथ्सवनं य-
थ्सान्नाय्यं यत्सान्नाय्यं भवति तेनैव
सवनान्न यन्ति समुपहूय भक्षय-
न्त्येतथ्सोमपीथा ह्येतर्हि यथाय-
तनं वा एतेषाꣳ सवनभाजो देवता

[5]यन्ति । वै । एते । सवनात् । ये । अर्हः ॥ १७ ॥
उत्सृजन्तीत्युत्–सृजन्ति । तुरीयम् । खलु । वै ।
एतत् । सवनम् । यत् । सान्नाय्यमिति सां–नाय्यम् ।
यत् । सान्नाय्यमिति सां–नाय्यम् । भवति । तेन ।
एव । सवनात् । न । यन्ति । समुपहूयेति सं–
उपहूय । भक्षयन्ति । एतत्सोमपीथा इत्येतत्–सो-
मपीथाः । हि । एतर्हि । यथायतनमिति यथा–
आयतनम् । वै । एतेषाम् । सवनभाज इति सव-
न–भाजः । देवताः । गच्छन्ति । ये । अर्हः । उ-

[5]यन्ति वा इत्यादि ॥ सान्नाय्यं भक्षयन्ति समुपहूयासावसावुपह्वय-स्वेति । एतर्हि एतस्मिन्नह्नि एतदेव सोमपानमेषामिति । पिबते-रौणादिकस्स्थक्प्रत्ययः । 'इदमोर्हिल्' इति हिल्प्रत्ययः, 'एते तौरथोः' इति एतादेशः । यथायतनमित्यादि । इह कृत्याभा-वादेतत् स्थानं हित्वा स्वंस्वं स्थानं गच्छन्ति । गतमन्यत् ॥

गच्छन्ति ये॑ऽह॒रुथ्सृ॒जन्त्य॑नुसव॒नं पु॑रो॒डा॒शा॒न्निर्व॑पन्ति यथायत॒नाद्दे॒व स॑वन॒भाजो॑ दे॒वता॒ अव॑ रुन्धते॒ऽष्टाक॑पालान्प्रातस्सव॒न एका॑दशकपाला॒न्माध्य॑न्दिने॒ सव॑ने॒ द्वाद॑शकपालाꣳ स्तृतीयसव॒ने छन्दाꣳ॑स्ये॒वाप्त्वाऽव॑ रु-

त्सृ॒जन्तीत्यु॑त्—सृ॒जन्ति॑ । [6]अ॒नु॒स॒व॒नमित्य॑नु—स॒व॒नम् । पु॒रो॒डा॒शान् । निरिति॑ । व॒प॒न्ति॒ । य॒था॒य॒त॒नादिति॑ यथा—आ॒य॒त॒नात् । ए॒व । स॒व॒न॒भाज॒ इति॑ सवन—भाज॑ः । दे॒वता॑ः । अवेति॑ । रु॒न्ध॒ते॒ । अ॒ष्टाक॑पाला॒नित्य॒ष्टा—क॒पा॒ला॒न् । प्रा॒त॒स्स॒व॒न इति॑ प्रातः—स॒व॒ने । एका॑दशकपाला॒नित्येका॑दश—क॒पा॒ला॒न् । माध्य॑न्दिने । सव॑ने । द्वाद॑शकपाला॒निति॒ द्वाद॑श—क॒पा॒ला॒न् । तृ॒ती॒य॒स॒व॒न इति॑ तृतीय—स॒व॒ने । छ-

---

[6]अनुसवनमित्यादि ॥ सवनेसवने सर्वस्मिन् सवने कालक्रमेण पुरोडाशान् तत्तत्सवनोक्तान् निर्वपन्ति। वीप्सायां 'यथार्थे यदव्ययम्' इत्यनोरव्ययीभावः । यथायतनाद्देवेति । स्वात्स्वादायतनाद्देवता अवरुन्धते । 'यथाऽसादृश्ये' इत्यव्ययीभावः । अष्टाकपालानित्यादि । प्रातस्सवने प्रातस्सवनकाले । एवं सर्वत्र । छन्दांस्येवेत्यादि । अष्टत्वादिकया गायत्र्यादीनां संख्यया गायत्र्यादीनि छन्दांस्याप्त्वा सवनं यज्ञमवरुन्धते ॥

न्धते वैश्वदेवं चरुं तृतीयसवने नि-
र्वपन्ति वैश्वदेवं वै तृतीयसवनं ते-
नैव तृतीयसवनान्न यन्ति ॥ १८ ॥
उथ्सृज्यां३ नोथ्सृज्या३मितिं मी-

न्दाꣳसि । एव । आप्त्वा । अवेतिं । रुन्धते । [7]वै-श्वदेवमितिं वैश्व–देवम् । चरुम् । तृतीयसवन इतिं तृतीय–सवने । निरितिं । वपन्ति । वैश्वदेवमितिं वैश्व–देवम् । वै । तृतीयसवनमितिं तृतीय–सव-नम् । तेनं । एव । तृतीयसवनादितिं तृतीय–सव-नात् । न । यन्ति ॥ १८॥

उदचत्युद्येऽहराप्त्वा पञ्चदश च ॥ ६ ॥

[1]उत्सृज्या३मित्युत्–सृज्या३म् । न । उत्सृ-ज्या३मित्युत्–सृज्या३म् । इतिं । मीमाꣳसन्ते ।

---

[7]वैश्वदेवमित्यादि ॥ तृतीयसवनकाले निर्वपणात् तृतीय-सवनानपगमः ॥

इति सप्तमे पञ्चमे षष्ठोनुवाकः.

---

[1]उक्तमहरुत्स्रष्टव्यमिति ॥ तदिदानीं विचारपूर्वं निर्णेतुमारभ-ते—उत्सृज्यामित्यादि ॥ किमुत्सृज्यं समुत्स्रष्टव्यमहः उत नेति वि-

माऽऽसन्ते ब्रह्मवादिनस्तद्वाहुरुथ्सृ-
ज्यमेवेत्यमावास्यायां च पौर्णमा-
स्यां चोथ्सृज्यमित्याहुरेते हि यज्ञं
वहत इति ते त्वाव नोथ्सृज्ये इ-

ब्रह्मवादिन इति ब्रह्म–वादिनः । तत् । उ । आहुः । उत्सृज्यमित्युत्–सृज्यम् । एव । इति । अमावास्यायामित्यमा–वास्यायाम् । च । पौर्णमास्यामिति पौर्ण–मास्याम् । च । उत्सृज्यमित्युत्–सृज्यम् । इति । आहुः । एते इति । हि । यज्ञम् । वहतः । इति । [2]ते । तु । वाव । न । उत्सृज्ये इत्युत्–

चारयन्ति ब्रह्मवादिनः । 'ऋदुपधाच्च' इति क्यप्प्रत्ययः । 'विचार्यमाणानां' इत्युदात्तः प्लुतः, तस्यासिद्धत्वात् कृदुत्तरपदप्रकृतिस्वरत्वं च निवर्तते । 'मान्बध' इत्यादिना मानेर्जिज्ञासायां सन्प्रत्ययः । तद्वाहुरित्यादि । तत्र चाहुः ब्रह्मवादिनोऽन्ये वा यज्ञविदः उत्सृज्यमेव नेदं विचार्यमिति । अथोत्सर्गकाला उच्यन्ते— अमावास्यायां चेत्यादि । हेतुमाह—एते हीति । यज्ञं कर्मान्तरं दर्शपूर्णमासात्मकं एते दर्शपूर्णमासे सर्वदा वहतः तस्मादुत्स्रष्टव्यानयोः* न यज्ञ† कालस्स्यादिति । किंच तदाधारत्वात् सर्वकर्मणां ताभ्यां तेषां मिश्रणं च प्रयोजनमिति ॥

[2]किं सर्वदैव तयोरुत्सृज्यमित्याह—ते त्वावेति ॥ संहितायां वाश-

*दुत्स्रष्टेऽप्यनयोः.    †उत्स्रष्टेत्यनयोः यज्ञशून्यः.

त्याहुर्ये अवान्तरं यज्ञं भेजाते इति या प्रथमा व्यष्टका तस्यामुथ्सृज्य-मित्याहुरेष वै मासो विशर इति नादिष्टम् ॥ ११ ॥ उथ्सृजेयुर्यदा-

सृज्ये । इति । आहुः । ये इति । अवान्तरमित्यव-अन्तरम् । यज्ञम् । भेजाते इति । इति । या । प्रथमा । व्यष्टकेति वि-अष्टका । तस्याम् । उत्सृज्यमित्युत्-सृज्यम् । इति । आहुः । एषः । वै । मासः । विशर इति वि-शरः । इति । [3]न । आ-

व्दस्य लोपः । तुशब्दो व्यावृत्तौ । ते तु अमावास्यापौर्णमास्यौ नोत्सृज्ये नोत्स्रष्टव्ये तयोरिति यज्ञविद आहुः । अधिकरणे कृत्यः । नेत्युक्तं, के ते इत्याह—ये अवान्तरं अभ्यन्तरं यज्ञं भेजाते अन्तः प्रविश्याङ्गभावेन यज्ञं भजेते धारयतः । छान्दसो लिट् । तत्र नोत्स्रष्टव्यमहरस्ति । अन्यथा एते अवेक्षमाणस्य तस्य यज्ञस्याभाव एव स्यात् । या प्रथमेत्यादि । या प्रथमा कृष्णाष्टमी व्यष्टकाख्या* तस्यामुत्सृज्यमित्याहुः । हेतुं चाहुः—मासस्यास्य एष विशरः विशरणस्थानमियं व्यष्टकेति । शीतातिप्रवृत्त्या विनष्ट इव मासोत्र भवतीति ॥

[3]नादिष्टमिति ॥ न नियमेनोत्सृष्टमप्युत्सृजेयुः । यत्र क्वचिदुत्सृष्टं न पुनस्तत्रोत्सृजेयुः । प्रथमग्रहणादेव सिद्धे वचनं क्वचि-

*व्यष्टका व्याख्याता. सं. ७-४-८.

दिष्टमुथ्सृजेयुर्यादृशे पुनः पर्याप्लावे मध्ये षडहस्य संपद्येत षडहैर्मासा-न्थ्संपाद्य यथ्सप्तममहस्तस्मिन्नुथ्सृ-दिष्टमित्या–दिष्टम् ॥ ११ ॥ उदिति । सृजेयुः । यत् । आदिष्टमित्या–दिष्टम् । उत्सृजेयुरित्युत्–सृ-जेयुः । यादृशे । पुनः । पर्याप्लाव इति परि–आप्लावे । मध्ये । षडहस्येति षट्–अहस्य । संपद्येतेति सं–पद्येत । [4]षडहैरिति षट्–अहैः । मासान् । संपा-द्येति सं–पाद्य । यत् । सप्तमम् । अहः । तस्मि-

---

दन्यत्र विधानार्थम् । तदेवाह—यदिति । यादृशे दिवसे आदि-ष्टमुत्सृजेयुः यद्युत्सर्गः प्रयुज्येत तदादिष्टमुत्सृजेयुः । कीदृश इत्या ह—यादृश इत्यादि । पुनः पर्याप्लावे पर्यावृत्तौ वर्तमानायां मध्ये षडहस्य यादृशे दिवसे अष्टमी संपद्यते यदि तादृशे पूर्वमुत्सृष्टं न पुनरुत्सृजेयुः । अतादृशत्वे द्वितीयादावप्युत्सृजेयुरिति । अत्र हि सावनेन सत्रं प्रवर्तते चान्द्रमानेन तिथिरिति वैषम्यात् कदाचि-त्तादृशत्वमपि स्यादिति । आदिष्टमित्यादेशः निवर्तते स्थानी स्या-दिति तुल्यत्वादुत्सृष्टमहरित्युच्यते* । स्थानी ह्यस्य क्वचिदादेशेन निवर्तितो न तत्र पुनर्निवर्त्यते, विषयान्तरे तु निवर्त्येत इति ॥

[4]षडहैरित्यादि ॥ षडहैः पञ्चभिः पञ्च मासान् संपाद्य यत्स-प्तमं पञ्चमषडहानन्तरभावि अहस्तस्मिन्नुत्सृजेयुः क्रमप्राप्तं कर्म । त-

---

*भूयिष्ठमित्यादेशनिवर्तितस्यापि तुल्यत्वादुत्सृष्टमहरुच्यते.

जेयुस्तदग्नये वसुमते पुरोडाशम-
ष्टाकपालं निर्वपेयुरैन्द्रं दधीन्द्राय
मरुत्वते पुरोडाशमेकादशकपालं वै-
श्वदेवं द्वादशकापालमग्नेर्वै वसुमतः
प्रातस्सवनं यदग्नये वसुमते पुरोडा-
शमष्टाकपालं निर्वपन्ति देवतामेव

न् । उदिति । सृजेयुः । तत् । अग्नये । वसुमत इति वसु—मते । पुरोडाशम् । अष्टाकपालमित्य-ष्टा—कपालम् । निरिति । वपेयुः । ऐन्द्रम् । दधि । इन्द्राय । मरुत्वते । पुरोडाशम् । एकादशकपाल-मित्येकादश—कपालम् । वैश्वदेवमिति वैश्व—दे-वम् । द्वादशकपालमिति द्वादश— कपालम् । अ-ग्नेः । वै । वसुमत इति वसु—मतः । प्रातस्सवन-मिति प्रातः—सवनम् । यत् । अग्नये । वसुमत इति वसु—मते । पुरोडाशम् । अष्टाकपालमित्य-

दग्नय इत्यादि । तस्मि* न्नुत्सृष्टेऽह्नि आग्नेयादीनि निर्वपेयुः—अ-ग्नेर्वा इत्यादि । प्रातस्सवने देवतां वसुमन्तमग्निं पुरोडाशेन भाग-वतीं कुर्वन्ति नोत्सृष्टा अप्यन्तरिता भवन्ति । अष्टत्वसङ्ख्यया च गा-यत्रं प्रातस्सवनमुपगच्छन्ति । (ततश्च उत्सृष्टं चानुत्सृष्टं च तदहर्भ-

*कस्मि.

तद्भागिनीं कुर्वन्ति ॥ २० ॥ सर्वनमष्टाभिरुपं यन्ति यदैन्द्रं दधि भवतीन्द्रमेव तद्भागधेयान्न च्यावयन्तीन्द्रस्य वै मरुत्वतो माध्यंन्दिनꣳ सवनं यदिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपन्ति देवता-

ष्टा—कपालम् । निर्वपन्तीति निः—वपन्ति । देवताम् । एव । तत् । भागिनीम् । कुर्वन्ति ॥ २० ॥ सवनम् । अष्टाभिः । उपेति । यन्ति । यत् । ऐन्द्रम् । दधि । भवति । इन्द्रम् । एव । तत् । भागधेयादिति भाग—धेयात् । न । च्यावयन्ति । इन्द्रस्य । वै । मरुत्वतः । माध्यंन्दिनम् । सवनम् । यत् । इन्द्राय । मरुत्वते । पुरोडाशम् । एकादशकपालमित्येकादश—कपालम् । निर्वपन्तीति निः—वपन्ति । देवताम् । एव । तत् । भागिनीम् । कु-

वति । एतदित्यादि । एतद्धि यज्ञं विच्छिन्दन्ति यत् षडहसन्ततं षडहैरविच्छेदेन सम्बद्धं सन्ततम् । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । अथानन्तरभावि अहरुत्सृजन्ति यज्ञमहरुत्सर्गेण विच्छिन्दन्ति । अथ यच्चाहरुत्सृजन्तीति । प्राजापत्यमित्यादि । उत्सृष्टेऽह्नि सन्तन्वन्ति अविछिन्नं कुर्वते)* नोत्सृष्टं भवति ।

*कुण्डलितोऽयं ग्रन्थः एकस्मिन्नेव कोशे दृश्यते नान्यत्र.

मेव तद्भागिनीं कुर्वन्ति सवनमेका-
दशभिरुपं यन्ति विश्वेषां वै देवाना-
मृभुमतां तृतीयसवनं यद्वैश्वदेवं द्वा-
दशकपालं निर्वपन्ति देवता एव त-
द्भागिनीः कुर्वन्ति सवनं द्वादशभिः
॥२१॥ उप यन्ति प्राजापत्यं पशु-

र्वन्ति । सवनम् । एकादशभिरित्येकादश–भिः । उपेति । यन्ति । विश्वेषाम् । वै । देवानाम् । ऋभुमतामित्यृभु–मतांम् । तृतीयसवनमिति तृतीय–सवनम् । यत् । वैश्वदेवमिति वैश्व–देवम् । द्वादशकपालमिति द्वादश–कपालम् । निर्वपन्तीति निः–वपन्ति । देवताः । एव । तत् । भागिनीः । कुर्वन्ति । सवनम् । द्वादशभिरिति द्वादश–भिः ॥ २१ ॥ उपेति । यन्ति । [5]प्राजापत्यमिति प्राजा–पत्यम् । पशुम् । एति । लभन्ते । यज्ञः । वै । प्र-

एवमुत्तरत्र द्रष्टव्यम् । 'ह्रस्वनुड्भ्याम्' इत्युदात्तः वसुभ्यो व्यत्ययेन भवति ॥

[5]प्राजापत्यमित्यादि ॥ तस्मिन्नेवाह्नि उक्तस्य द्विर्वचनं पुरोडाशा मा बाधिषतेति । अननुसर्गाय अनुत्सर्गाय प्राजापत्यः पशुः ॥

मा लभन्ते यज्ञो वै प्रजापतिर्यज्ञ-
स्यानंनुसर्गायाभिवर्त इतष्षण्मासो
ब्रह्मसामं भवति ब्रह्म वा अभिवर्तो
ब्रह्मणैव तत्सुवर्गं लोकमभिवर्तय-
न्तो यन्ति प्रतिकूलमिव हीतस्सुवर्गो

जापतिरिति प्रजा-पतिः । यज्ञस्य । अनंनुसर्गा-
येत्यनंनु-सर्गाय । [6]अभिवर्त इत्यभि-वर्तः । इतः।
षट् । मासः । ब्रह्मसाममिति ब्रह्म-सामम् । भ-
वति । ब्रह्म । वै । अभिवर्त इत्यभि-वर्तः । ब्रह्मणा ।
एव । तत् । सुवर्गमिति सुवः-गम् । लोकम् ।
अभिवर्तयन्त इत्यभि-वर्तयन्तः । यन्ति । प्रतिकू-
लमिति प्रति-कूलम् । इव । हि । इतः । सुवर्ग
इति सुवः-गः । लोकः । [7]इन्द्रं । क्रतुम् । नः ।

---

[6]अभिवर्त इति ॥ पूर्वस्मिन् पक्षसि इत इमं प्रथममारभ्य इतो वा यतः षण्मासोभिवर्तो ब्रह्मसामं भवति । (व्यत्यये) ल्यब्लोपे पञ्चमी । ब्रह्म वा इत्यादि । स्वर्गं लोकं ब्रह्मणैवाभिमुख्येन वर्तयन्तो गच्छान्ति स्वर्गमेव प्रतिपद्यन्ते । प्रतिकूलमिति । इत इमं मनुष्यलोकमपेक्ष्य प्रतिकूलं प्रतिकूलमिव हि स्वर्गो लोको वर्तते; अधोमुखत्वादित्येके । मृत्वा तत्र गमनादित्यन्ये ॥

[7]इन्द्र क्रतुमित्यादि ॥ अमुतः अमुं द्यामारभ्य आयतां पर्या-

लोक इन्द्र क्रतुं न आ भर पिता पु-
त्रेभ्यो यथा । शिक्षा णो अस्मिन्पु-
रुहूत यामनि जीवा ज्योतिरशीम-
हीत्यमुतं आयताꣳ षण्मासो ब्रह्म-
सामं भवत्ययं वै लोको ज्योतिः

एति । भर । पिता । पुत्रेभ्यः । यथा । शिक्ष ।
नः । अस्मिन्न् । पुरुहूतेति पुरु-हूत । यामनि ।
जीवाः । ज्योतिः । अशीमहि । इति । अमुतः ।
आयतामित्या-यताम् । षट् । मासः । ब्रह्मसाम-
मिति-ब्रह्म-सामम् । भवति । [8]अयम् । वै । लो-
कः । ज्योतिः । प्रजेति प्र-जा । ज्योतिः । इमम् ।

---

वृत्तानां षण्मासो ब्रह्मसामं भवति 'इन्द्र क्रतुं' इति मन्त्रेण । इयं च पथ्याबृहती, तृतीयस्य पादस्य द्वादशाक्षरत्वात् । अर्थस्तु—हे इन्द्र ! क्रतुं प्रज्ञां कर्म वा तद्विषयं कर्मैव वा नः अस्मभ्यं आभर आहर । 'हृग्रहोर्भः' । यथा पिता पुत्रेभ्यः आहरति । किञ्च—नोस्मान् अस्मिन् यामनि यज्ञे शिक्ष शक्तान् कुरु । 'द्व्यचोतस्तिङः' इति दीर्घः । हे पुरुहूत त्वत्प्रसादात् वयं जीवाः जीवन्तः ज्योतिष्मन्तं मनुष्यलोकं अशीमहि प्राप्नुयामः । अश्नोतेश्शपो लुक् ॥

[8]अथास्यैव ब्राह्मणम्—अयं वा इत्यादि ॥ अयं लोको

प्रजा ज्योतिरिममेव तल्लोकं पश्यं-
न्तोऽभिवदन्त आ यन्ति ॥ २२ ॥

देवानां वा अन्तं जग्मुषामिन्द्रियं
वीर्यमपाक्रामत्तत्क्रोशेनावारुन्धत त-
त्क्रोशस्य क्रोशत्वं यत्क्रोशेन चा-

एव । तत् । लोकम् । पश्यन्तः । अभिवदन्त इ-
त्यभि—वदन्तः । एति । यन्ति ॥ २२ ॥

नादिष्टं कुर्वन्ति द्वादशभिरिति विंशतिश्च॥७॥

[1]देवानाम् । वै । अन्तम् । जग्मुषाम् । इन्द्रियम् ।
वीर्यम् । अपेति । अक्रामत् । तत् । क्रोशेन । अवेति ।
अरुन्धत । तत् । क्रोशस्य । क्रोशत्वमिति क्रोश–

---

ज्योतिः प्रकाशः प्रत्यक्षत्वात् । प्रजा ज्योतिः प्रकाशहेतुत्वात् । एवंविधाभ्यां पक्षाभ्यां उभौ लोकौ अभिजितौ भवतः ॥

इति सप्तमे पञ्चमे सप्तमोनुवाकः.

---

[1]इत्थं विकृतयः काश्चिद्विहिताः । अधुना प्रकृतावेव यदुपान्त्यं महाव्रतं नाम तद्गतान् कांश्चिद्विशेषान् विधातुमाह—देवानामित्यादि ॥ देवानामन्तं संवत्सरसत्रस्य समाप्तिं जग्मुषां गतवतां इन्द्रियं वीर्यं च अपागच्छत् । तत् क्रोशनाम्ना साम्ना अवारुन्धत । तत्क्रोशस्य

त्वालस्यान्ते स्तुवन्ति यज्ञस्यैवान्तं
गत्वेन्द्रियं वीर्यमव रुन्धते सत्रस्य-
र्ध्याऽऽहवनीयस्यान्ते स्तुवन्त्यग्निमे-
वोपद्रष्टारं कृत्वर्धिमुप यन्ति प्र-

त्वम् । यत् । क्रोशेन । चात्वालस्य । अन्ते । स्तु-
वन्ति । यज्ञस्य । एव । अन्तम् । गत्वा । इन्द्रि-
यम् । वीर्यम् । अवेति । रुन्धते । [2]सत्रस्यर्ध्या ।
आहवनीयस्येत्या-हवनीयस्य । अन्ते । स्तुवन्ति ।
अग्निम् । एव । उपद्रष्टारमित्युप-द्रष्टारम् । कृत्वा ।
ऋद्धिम् । उपेति । यन्ति । [3]प्रजापतेर्हृदयेन । हृ-

---

साम्नः क्रोशत्वम् । क्रुश आह्वाने, रोदने च । उञ्छादिर्द्रष्टव्यः । यदित्यादि । गतम् । अन्ते समीपे ॥

[2]सत्रस्यर्ध्येति ॥ इयमपि समाख्या पदद्वयात्मिका; यथा अहिर्बुध्नियेति पदद्वयमिति एकस्य देवस्याख्याती । 'गोपोषं पुष्णाति' इतिवत् प्रत्येकं वाचकत्वेऽपि समुदिताभ्यामेव देवस्याभिधानमिति । उभयत्र अनवधारणात् अनवग्रहः । अत्र त्ववयवयोः आनर्थक्यात न पदकार्यं क्रियते । शशविषाणादिवत् विभक्त्युत्पत्तिः । सत्रस्य समृद्धिहेतुत्वं तु विद्यमानमाख्याप्राधान्यात न विवक्ष्यते । अग्निमित्यादि । अग्निमेव उपद्रष्टारं साक्षिणं कृत्वा सत्रस्य ऋद्धिमुपयन्ति ॥

[3]प्रजापतेर्हृदयेनेति ॥ इयमपि पूर्ववत् समाख्या पदद्वयात्मिका ।

जापतेर्हृदयेन हविर्धानेऽन्तस्स्तुव-
न्ति प्रेमाणमेवास्य गच्छन्ति श्लो-
केन पुरस्तात्सदसः ॥ २३ ॥ स्तु-
वन्त्यनुश्लोकेन पश्चाद्यज्ञस्यैवान्तं ग-
त्वा श्लोकभाजो भवन्ति नवभिर-
ध्वर्युरुद्गायति नव वै पुरुषे प्राणाः

**विर्धान इति हविः—धाने । अन्तः । स्तुवन्ति । प्रेमाणम् । एव । अस्य । गच्छन्ति । श्लोकेन । पुरस्तात् । सदसः ॥ २३ ॥ स्तुवन्ति । अनुश्लोकेनेत्यनु—श्लोकेन । पश्चात् । यज्ञस्य । एव । अन्तम् । गत्वा । श्लोकभाज इति श्लोक—भाजः । भवन्ति । [4]नवभिरिति नव—भिः । अध्वर्युः । उदिति । गायति । नव । वै । पुरुषे । प्राणा इति प्र—अनाः ।**

---

प्रजापतेर्हृदयवत् विद्यमानोऽप्यर्थो न विवक्ष्यते । अनेन साम्ना हविर्धानेऽन्तः हविर्धानस्य मध्ये स्तुवन्ति । प्रेमाणं प्रियत्वमस्य प्रजापतेर्गच्छन्ति । प्रियस्थिरादिना प्रादेशः । श्लोकानुश्लोकशब्दावपि समाख्ये । ताभ्यां सदसः पुरस्तात्पश्चाच्च स्तुवन्ति । श्लोकभाजः कीर्तिभाजः ॥

[4]नवभिस्स्तोत्रियाभिः उद्गायति अध्वर्युः । तस्मादित्यादि । तस्मात् शीर्ष्णोऽन्यानि सर्वाण्यङ्गानि पुरुषः प्रत्यचाति प्रत्याकर्षति

प्राणानेव यजमानेषु दधाति सर्वा ऐन्द्रियो भवन्ति प्राणेष्वेवेन्द्रियं दधत्यप्रतिहृताभिरुद्गायति तस्मात्पुरुषस्सर्वाण्यन्यानि शीर्ष्णोऽङ्गानि प्रत्यंचति शिर एव न पञ्चदशꣳ रथन्तरं भवतीन्द्रियमेवाव रुन्धते सप्तदशम् ॥ २४ ॥ बृहदन्नाद्यस्याव-

प्राणानिति प्र-अनान् । एव । यजमानेषु । दधाति । सर्वाः । ऐन्द्रियः । भवन्ति । प्राणेष्विति प्र-अनेषु । एव । इन्द्रियम् । दधति । अप्रतिहृताभिरित्यप्रति-हृताभिः । उदिति । गायति । तस्मात् । पुरुषः । सर्वाणि । अन्यानि । शीर्ष्णः । अङ्गानि । प्रतीति । अचति । शिरः । एव । न । पञ्चदशमिति पञ्च-दशम् । रथंतरमिति रथं-तरम् । भवति । इन्द्रियम् । एव । अवेति । रुन्धते । सप्तदशमिति सप्त-दशम् ॥ २४ ॥ बृहत् । अन्नाद्यस्येत्यन्न-अद्यस्य । अवरुद्ध्या इत्यव-रुद्ध्यै ।

---

संकोचयति । प्रभावरहितत्वात् सङ्कोचः । त्रिवृच्छिरो भवति शिर एव केवलं न प्रत्यचाति तस्य त्रिवृत्त्वात् पञ्चदशकं रथन्तरं साम भवति एकः पक्षः । सप्तदशं बृहत्सामकमेकपक्षः ।

रुद्ध्या अथो प्रैव तेन जायन्त एक-
विꣳशं भद्रं द्विपदासु प्रतिष्ठित्यै प-
ङ्क्तय उप गायन्ति मिथुनत्वाय प्र-
जात्यै प्रजापतिः प्रजा असृजत सो-
कामयतासामहꣳ राज्यं परीयामि-
ति तासाꣳ राजनेनैव राज्यं पर्यैत्त-

अथो इति । प्रेति । एव । तेन । जायन्ते । एक-विꣳशमित्येक-विꣳशम् । भद्रम् । द्विपदास्विति द्वि-पदासु । प्रतिष्ठित्या इति प्रति-स्थित्यै । पङ्क्तयः । उपेति । गायन्ति । मिथुनत्वायेति मिथुन-त्वाय । प्रजात्या इति प्र-जात्यै । [5]प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र-जाः । असृजत । सः । अकामयत । आसाम् । अहम् । राज्यम् । परीति । इयाम् । इति । तासाम् । राजनेन । एव । राज्यम् । परीति । ऐत् । तत् । राजनस्य ।

एकविंशं भद्रसामकं द्विपदासु ऋक्षु पञ्चभिः स्तोत्रियाभिः पञ्चः पङ्क्तय उपगायन्ति भद्रं साम । गतमन्यत् ॥

[5]प्रजापतिरित्यादि ॥ गतम् । आसां राज्यं राजभावं अहं परीयां परिगच्छेयमिति पुरोहितादित्वाद्राजशब्दाद्यक् । ततो राजने-

द्राजनस्य राजनत्वं यद्राजनं भव-
ति प्रजानामेव तद्यजमाना राज्यं
परि यन्ति पञ्चविꣳशं भवति
प्रजापतेः ॥ २५ ॥ आप्त्यै पञ्चभि-
स्तिष्ठन्तस्स्तुवन्ति देवलोकमेवाभि
जयन्ति पञ्चभिरासीना मनुष्यलो-

राजनत्वमिति राजन—त्वम् । यत् । राजनम् । भव-
ति । प्रजानामिति प्र—जानाम् । एव । तत् । यजमा-
नाः । राज्यम् । परीति । यन्ति । [6]पञ्चविꣳशमि-
ति पञ्च—विꣳशम् । भवति । प्रजापतेरिति प्रजा—
पतेः ॥२५॥ आप्त्यै । पञ्चभिरिति पञ्च—भिः । तिष्ठ-
न्तः । स्तुवन्ति । देवलोकमिति देव—लोकम् । ए-
व । अभीति । जयन्ति । पञ्चभिरिति पञ्च—भिः ।
आसीनाः । मनुष्यलोकमिति मनुष्य—लोकम् ।
एव । अभीति । जयन्ति । दश । सामिति । पद्य-

नैव साम्ना राज्यं पर्यैत् तद्राजनस्य राजनत्वम् । राजत्यनेनेति राजनम् । यदित्यादि । गतम् ॥

[6]पञ्चविंशमित्यादि ॥ तद्राजनं पञ्चविंशं भवति आत्मा प्रजापतेः पञ्चविंशस्याप्त्यै भवति । पञ्चभि स्तोत्रियाभिः तिष्ठन्तः

कमेवाभि जयन्ति दश सं पद्यन्ते द-
शाक्षरा विराडन्नं विराड्विराजैवान्ना-
द्यमवं रुन्धते पञ्चधा विनिषद्य स्तुव-
न्ति पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्त्ये-
कैकयाऽस्तुतया समायन्ति दिग्भ्य
एवान्नाद्यꣳ सं भरन्ति ताभिरुद्गातो-

न्ते। दशाक्षरेति दश–अक्षरा । विराडिति वि–राट् । अन्नम् । विराडिति वि–राट् । विराजेति वि–राजा । एव । अन्नाद्यमित्यन्न–अद्यम् । अवेति । रुन्धते । [7]पञ्चधेति पञ्च–धा । विनिषद्येति वि–नि-षद्य । स्तुवन्ति । पञ्च । दिशः । दिक्षु । एव । प्रतीति । तिष्ठन्ति । एकैकयेत्येकया–एकया । अस्तुतया । समायन्तीति सं–आयन्ति । दिग्भ्य इति दिक्–भ्यः । एव । अन्नाद्यमित्यन्न–अद्यम् । समिति । भरन्ति । ताभिः । उद्गातेत्युत्–गाता ।

स्तुवन्ति । पञ्चभिरासीनास्स्तुवन्तीत्येव । पञ्चकाभ्यामुभयोर्लोकयोरभिजयः । दशेत्यादि । गतम् ॥

[7]नवभिरध्वर्युरुद्गायतीत्युक्तम् ॥ पञ्चधा पञ्चस्तोत्रिया विनिषद्य पृथक्पृथगासीना दिक्षु स्तुवन्ति एकैकयाऽस्तुतया समायन्ति सङ्ग-

द्गायति दिग्भ्य एवान्नाद्यम् ॥२६॥
संभृत्य तेज आत्मन्दधते तस्मादेकः
प्राणस्सर्वाण्यङ्गान्यवत्यथो यथा सु-
पर्ण उत्पतिष्यञ्छिर उत्तमं कुरुत
एवमेव तद्यजमानाः प्रजानामुत्त-

उदिति । गायति । दिग्भ्य इति दिक्-भ्यः । ए-व । अन्नाद्यमित्यन्न-अद्यम् ॥ २६ ॥ संभृत्येति सं-भृत्य । तेजः । आत्मन्न् । दधते । तस्मात् । एकः । प्राण इति प्र-अनः । सर्वाणि । अङ्गानि । अव-ति । [8]अथो इति । यथा । सुपर्ण इति सु-पर्णः । उत्पतिष्यन्नित्युत्-पतिष्यन्न् । शिरः । उत्तममित्युत्-तमम् । कुरुते । एवम् । एव । तत् । यजमानाः । प्रजानामिति प्र-जानाम् । उत्तमा इत्युत्-तमाः । भवन्ति । [9]आसन्दीमित्या-सन्दीम् । उद्गातेत्युत्-

च्छन्ति उद्गातारम् । ताभिश्चतसृभिरुद्गातोद्गायति । तस्मादित्यादि । गतम् ॥

[8]अथो अपि च यथा सुपर्ण उत्पतिष्यन्न् उत्पतितुमारभमाणः शिर उत्तमं उद्गततमं कुरुते एवमेव यजमाना आत्मनि तेजो दधानाः प्रजानामुत्तमा भवन्ति । उत्तमशब्द उञ्छादिरन्तोदात्तः ॥

[9]आसन्दीमारोहत्युद्गाता । साम्राज्यं गच्छन्ति सर्वे । एवं

मा भवन्त्यासन्दीमुद्गाताऽऽ रोहति साम्राज्यमेव गच्छन्ति प्रेङ्खꣳ होता नाकस्यैव पृष्ठꣳ रोहन्ति कूर्चावध्वर्युर्ब्रध्नस्यैव विष्टपं गच्छन्त्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्त्यथो आक्रमणमेव तथ्सेतुं यजमानाः कुर्वते सुवर्गस्य लोकस्य समष्ट्यै ॥ २७ ॥

गाता । एति । रोहति । साम्राज्यमिति सां—राज्यम् । एव । गच्छन्ति । प्रेङ्खम् । होता । नाकस्य । एव । पृष्ठम् । रोहन्ति । कूर्चौ । अध्वर्युः । ब्रध्नस्य । एव । विष्टपम् । गच्छन्ति । [10]एतावन्तः । वै । देवलोका इति देव—लोकाः । तेषु । एव । यथापूर्वमिति यथा—पूर्वम् । प्रतीति । तिष्ठन्ति । अथो इति । आक्रमणमित्या—क्रमणम् । एव । तत् । सेतुम् । यजमानाः । कुर्वते । सुवर्गस्येति

---

सर्वेषां फलं सर्वत्र । प्रेङ्खं डोलां. होताऽऽरोहतीत्येव । ब्रध्नस्यादित्यस्य विष्टपं लोकम् ॥

[10]एतावन्त इत्यादि ॥ अथो अपि च आक्रमणसाधनं सेतुं

अर्क्येण वै सहस्रशः प्रजापतिः
प्रजा असृजत ताभ्य इलान्देनेरां
लूतामवारुन्ध यदर्क्यं भवति प्रजा
एव तद्यजमानास्सृजन्त इलान्दं

सुवः–गस्य । लोकस्य । समष्ट्या इति सं–अ-
ष्ट्यै ॥ २७ ॥

सर्दसस्सप्तदशं प्रजापतेर्गायति दिग्भ्य
एवान्नाद्यं प्रत्येकादश च ॥ ८ ॥

अर्क्येण । वै । सहस्रश इति सहस्र–शः ।
प्रजापतिरिति प्रजा–पतिः । प्रजा इति प्र–जाः ।
असृजत । ताभ्यः । इलान्देन । इराम् । लूताम् ।
अवेति । अरुन्ध । यत् । अर्क्यम् । भवति । प्र-
जा इति प्र–जाः । एव । तत् । यजमानाः । सृ-

---

यजमानाः कुर्वते । स्वर्गस्य समुद्रस्य समष्ट्यै सम्यगवाप्तये तद्भव-
ति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

इति सप्तमे पञ्चमे अष्टमोनुवाकः.

---

[1]अर्क्येणेत्यादि ॥ अर्क्याख्येन साम्ना प्रजापतिः सहस्रशः सहस्रं-सहस्रं प्रजा बहुतमा असृजत । 'संख्यैकवचनाच्च वीप्सायाम्' इति शस् । ताभ्यः सृष्टाभ्यः इलान्देन साम्ना इराम् लूतां

भवति प्रजाभ्यं एव सृष्टाभ्य इरां
लूतामवं रुन्धते तस्माद्याꣳ समाꣳ
सत्रꣳ समृद्धं क्षोधुकास्ताꣳ समां
प्रजा इषꣳ ह्यासामूर्जमाददते याꣳ
समां व्यृद्धमक्षोधुकास्ताꣳ समां

जन्ते । इलान्दम् । भवति । प्रजाभ्य इति प्र-जाभ्यः । एव । सृष्टाभ्यः । इराम् । लूताम् । अवेति । रुन्धते । [2]तस्मात् । याम् । समाम् । स-त्रम् । समृद्धमिति सं-ऋद्धम् । क्षोधुकाः । ताम् । समाम् । प्रजा इति प्र-जाः । इषम् । हि । आ-साम् । ऊर्जम् । आददत इत्या-ददते । याम् । समाम् । व्यृद्धमिति वि-ऋद्धम् । अक्षोधुकाः ।

---

लवनशीलां प्रजाभिः विच्छिन्नां अवारुन्ध अविच्छेदेनाप्तवान् । लूनातेरौणादिकः तान्प्रत्ययः । यदक्ष्यमित्यादि । साम्नस्स्तुतिः गता । इरां अन्दाति बध्नातीति इरान्दम् । अदि बन्धने, कर्मण्यण् । 'संज्ञायां च' इति पूर्वपदाद्युदात्तत्वम्, कपिलकादित्वाल्लत्वम् ॥

[2]तस्मादित्यादि ॥ यस्मादित्थं प्रजाभ्य इरामाददते सत्रिणः तस्माद्यां समां संवत्सरसत्रं समृद्धं अन्नादिना भवति । अत्यन्तसंयोगे द्वितीया । तां समां प्रजाः क्षोधुकाः क्षुच्छीलाः स्युः । छान्दस उकञ् । हेतुमाह—इषमित्यादि । आसां प्र-

प्रजाः ॥ २८ ॥ न ह्यासामिषमूर्ज-
मादर्दत उत्क्रोदं कुर्वते यथा बन्धा-
न्मुमुचाना उत्क्रोदं कुर्वत एवमेव
तद्यजमाना देवबन्धान्मुमुचाना उ-
त्क्रोदं कुर्वत इषमूर्जमात्मन्दधाना

ताम् । समाम् । प्रजा इति प्र—जाः ॥ २८ ॥ न । हि । आसाम् । इषम् । ऊर्जम् । आदर्दत इत्या—दर्दते । उत्क्रोदमित्युत्—क्रोदम् । कुर्वते । यथा । बन्धात् । मुमुचानाः । उत्क्रोदमित्युत्—क्रोदम् । कुर्वते । एवम् । एव । तत् । यजमानाः । देवबन्धादिति देव—ब-न्धात् । मुमुचानाः । उत्क्रोदमित्युत्—क्रोदम् । कुर्वते । इषम् । ऊर्जम् । आत्मन्न् । दधानाः ।

---

जानां इषमन्नं ऊर्जं रसं दुग्धादि च यस्मात्सत्रिण आददते त-स्मात् क्षोधुकाः । अथ यां समां सत्रं व्यृद्धं क्षीरादिना अ-समृद्धं अक्षोधुकाः तां समां प्रजाः कुर्वते । हेतुमाह—न ह्यासामिति । उत्क्रोदतीत्युत्क्रोदं साम सर्वे यजमानाः कुर्वते । क्रुद कुत्सिते शब्दे । यथेत्यादि । उत्कृष्टरवं हर्षेण कुर्वते मुमु-चानाः मुच्यमानाः । छान्दसः कर्मणि लिटः कानजादेशः । एवमेवेति । देवबन्धात् संवत्सरसत्रात् मुच्यमानाः उत्क्रोदं कुर्व-ते । एतत्सामकरणेन इषमूर्जं चात्मनि दधानाः धारणेन हेतु-ना । हेतौ शानच्, 'अभ्यस्तानामादिः' इत्यादेरुदात्तत्वम् ॥

वाणश्शततन्तुर्भवति शतायुः पुरुषश्शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्त्याजिं धावन्त्यनभिजितस्याभिजित्यै दुन्दुभीन्त्समाघ्नन्ति परमा वा एषा वाग्या दुन्दुभौ परमामेव ॥२१॥

[3]वाणः । शततन्तुरिति शत-तन्तुः । भवति । शतायुरिति शत-आयुः । पुरुषः । शतेन्द्रिय इति शत-इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठन्ति । आजिम् । धावन्ति । अनभिजितस्येत्यनभि-जितस्य । अभिजित्या इत्यभि-जित्यै । [4]दुन्दुभीन् । समाघ्नन्तीति सं-आघ्नन्ति । परमा । वै । एषा । वाक् । या । दुन्दुभौ । परमाम् । एव ॥२१॥ वाचम् । अवेति । रुन्धते । भूमिदुन्दुभि-

[3]वाण इत्यादि ॥ यदियं दण्ड इत्यादिस्थितेषु * दशस्वप्यतिमथितेषु तेषु प्रत्येकं दशदश तन्तवः प्रोताः शततन्तुः वाणो वीणाविशेषः, तेन वाद्यमानेन आजिं धावन्ति । तदनभिजितस्याभिजित्यै भवति ॥

[4]दुन्दुभीन् समाघ्नन्ति तदानीं युगपत् ध्मानयन्ति । परमेत्यादि । गतम् । भूमिदुन्दुभिमाघ्नन्ति । चर्मणाऽऽच्छादितमुखं भूगर्तं भू-

*इन्दद इत्यादिस्थासु.

वाचमवं रुन्धते भूमिदुन्दुभिमा घ्नन्ति
यैवेमां वाक्प्रविष्टा तामेवावं रुन्ध-
तेऽथो इमामेव जंयन्ति सर्वा वाचो
वदन्ति सर्वासां वाचामवंरुद्ध्या आ-
र्द्रे चर्मन्व्यायंच्छेते इन्द्रियस्यावंरु-
द्ध्या आऽन्यः क्रोशति प्रान्यश्शंस-

मिति भूमि-दुन्दुभिम् । एति । घ्नन्ति । या । एव । इमाम् । वाक् । प्रविष्टेति प्र-विष्टा । ताम् । एव । अवेति । रुन्धते । अथो इति । इमाम् । एव । जयन्ति । सर्वाः । वाचः । वदन्ति । सर्वासाम् । वाचाम् । अवंरुद्ध्या इत्यवं-रुद्ध्यै । [5]आर्द्रे । चर्मन्न् । व्यायंच्छेते इति वि-आयंच्छेते । इन्द्रियस्य । अ-वंरुद्ध्या इत्यवं-रुद्ध्यै । एति । अन्यः । क्रोशति ।

---

मिदुन्दुभिः पुच्छकाण्डेन । या वागिमां पृथिवीं प्रविष्टा तामवरुन्धे। अथो अपि च इमां जयत्येव सर्वा वाचः रथन्तरमनुष्यादीनाम् ॥

[5]आर्द्रे चर्मन्निति ॥ आर्द्रचर्मनिमित्तं ब्राह्मणशूद्रौ आकर्षन्तौ कलहं कुर्वतः । 'आङो यमहनः' इत्यात्मनेपदम् । अन्य इत्यादि । तयोरन्य आक्रोशति निन्दति सत्रिणः 'इम उद्वासीकारिण इमे दुर्भूतमकन्न्' इति । अन्यो ब्राह्मणः प्रशंसति 'इमेऽरात्सुरिमे सुभूतमकन्न्' इति । 'एकान्याभ्याम्' इति प्र-

सति य आक्रोशति पुनात्येवैनान्थ्स
यः प्रशꣳसति पूतेष्वेवान्नाद्यं दधा-
त्यृषिकृतं च ॥३०॥ वा एते देव-
कृतं च पूर्वैर्मासैरवं रुन्धते यद्भूते-
च्छदाꣳ सामानि भवन्त्युभयस्याव-

भेति । अन्यः । शꣳसति । यः । आक्रोशतीत्या-
क्रोशति । पुनाति । एव । एनान् । सः । यः ।
प्रशꣳसतीति प्र-शꣳसति । पूतेषु । एव । अन्ना-
द्यमित्यन्न-अद्यम् । दधाति । [6]ऋषिकृतमित्यृषि-
कृतम् । च ॥ ३० ॥ वै । एते । देवकृतमिति दे-
व-कृतम् । च । पूर्वैः । मासैः । अवेति । रुन्धते ।
यत् । भूतेच्छदामिति भूते-छदाम् । सामानि ।
भवन्ति । उभयस्य । अवरुद्ध्या इत्यव-रुद्ध्यै ।

---

थमा तिङ्विभक्तिर्निहन्यते । तथा य आक्रोशति स एनान् उत्पुनाति शोधयति । यः प्रशंसति स पूतेष्वेतेषु अन्नाद्यं दधाति ॥

[6]ऋषिकृतमित्यादि ॥ ऋषिभिः कृतं च देवैः कृतं च उपकारं दृष्टस्वरूपं पूर्वैर्मासैरेते सत्रिणोवरुन्धते भूतेच्छदां सामभिस्तदुभयमप्यवरुन्धते मनुष्यकृतं च दृष्टस्वरूपम् । सर्वत्र 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

रुद्धयै यन्ति वा एते मिथुनाद्ये संव-
त्सरमुपयन्त्यन्तर्वेदि मिथुनौ सं भ-
वतस्तेनैव मिथुनान्न यन्ति ॥ ३१ ॥
चर्मावं भिन्दन्ति पाप्मानमेवैषामव

[7]यन्ति । वै । एते । मिथुनात् । ये । संवत्सरमिति
सं—वत्सरम् । उपयन्तीत्युप—यन्ति । अन्तर्वेदी-
त्यन्तः—वेदि । मिथुनौ । समिति । भवतः । तेन ।
एव । मिथुनात् । न । यन्ति ॥ ३१ ॥

व्यृद्धमक्षोधुकास्ताᳫंसमाः प्रजाः परमा-
मेव चं त्रिᳫंशच्चं ॥ ९ ॥

[1]चर्म । अवेति । भिन्दन्ति । पाप्मानम् । एव ।

[7]यन्ति वा इत्यादि ॥ अवगच्छन्ति खल्वेते मिथुनत्वात् मिथुनशक्तिं जहति ये संवत्सरमुपयन्ति, बहुत्वात् कालस्य व्यपगतमिथुनशक्तिस्स्यात् । तस्मादन्तर्वेदि मिथुनौ सम्भवतः मिथुनकृत्यं सहाचरतः मैथुनं कुरुतः पुंश्चली मागधश्च । तेनैव मिथुनात् मिथुनभावान्नापगच्छन्ति सत्रिणः ॥

इति सप्तमे पञ्चमे नवमोऽनुवाकः.

[1]चर्माव भिन्दन्तीत्यादि ॥ पूर्वोक्तं चर्म ब्राह्मणेन सम्मितमाग्नीध्रेण मारुतं* कवचिनो बाणेन अवभिन्दन्ति । राजपुत्रा इत्येके । एषां सत्रिणां पाप्मानमेवावभिन्दन्ति अनेन चर्मावभेदेन । माऽप-

*आग्नीध्रस्य पु.

भिन्दन्ति माऽपं राथ्सीर्माऽति व्या-
थ्सीरित्याह संप्रत्येवैषां पाप्मानमवं
भिन्दन्त्युदकुम्भानधिनिधायं दास्यो
मार्जालीयं परिं नृत्यन्ति पदो निं-

एषाम् । अवेति । भिन्दन्ति । मा । अपेति । रात्सीः । मा । अतीति । व्यात्सीः । इति । आह । संप्रतीति सं-प्रति । एव । एषाम् । पाप्मानम् । अवेति । भिन्दन्ति । [2]उदकुम्भानित्युंद-कुम्भान् । अधिनिधायेत्यंधि-निधायं । दास्यः । मार्जालीयम् । परीति । नृत्यन्ति । पदः । निघ्नतीरिति नि-घ्नतीः । इदंमधुमितीदं-मधुम् । गायन्त्यः ।

रात्सीः लक्षादन्यत्र व्यथनं मा कार्षीः । माऽतिव्यात्सीः वेगमतीत्य परस्तात् बाणं मा जीगम इत्याह हे वेदिन् । संप्रत्येवेति । संप्रति कृतक्रियमाणकरिष्यमाणसर्वपापक्षयकरत्वं सम्यक्कं युक्तरूपं यदेषामिति ॥

[2]उदकुम्भानित्यादि ॥ उदकुम्भान् शिरस्यधिनिधाय दास्यो दासकुमार्यो मार्जालीयं परितो नृत्यन्ति पदः पदा निघ्नतीः निघ्नन्त्यः कुटित्वा न यन्त्यः (कुटिलं यन्त्यः) इदंमधुं गायन्त्यः 'इदं मधु इदं मधु' इत्येवं गायन्त्यः । केचिदाहुः— 'इयं वाव सरघा । तस्या अग्निरेव सारघं मधु'* इत्यादिमन्त्रः इदम्मधुशब्देनोच्यते इति ॥

*ब्रा. ३-१०,१०.

घ्नतीरिदंमंधुं गायन्त्यो मधु वै दे-
वानां परममन्नाद्यं परममेवान्नाद्य-
मवं रुन्धते पदो नि घ्नन्ति महीया-
मेवैषु दधति ॥ ३२ ॥
पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा
दिवे स्वाहा संप्लोष्यते स्वाहा संप्ल-

[3]मधु । वै । देवानाम् । परमम् । अन्नाद्यमित्यन्न-अद्यम् । परमम् । एव । अन्नाद्यमित्यन्न-अद्यम् । अवेति । रुन्धते । पदः । नीति । घ्नन्ति । महीयाम् । एव । एषु । दधति ॥ ३२ ॥

चर्मैकान्नपंञ्चाशत् ॥ १० ॥

[1]पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । संप्लोष्यत इति सं-प्लोष्यते । स्वाहा । संप्लवमा-

---

[3]मधु वा इत्यादि ॥ गतम् । महीयां पूजाम् । महीङ् कण्ड्वादिर्घगन्तः, ततः 'अप्रत्ययात्' इत्यकारप्रत्ययः ॥

इति सप्तमे पञ्चमे दशमोनुवाकः.

---

[1]अथाश्वमेधे नक्तंहोमाः—पृथिव्यै स्वाहेत्यादयः निगदसिद्धाः ॥ संप्लवनं वर्षार्थमुपक्रमः; त्रैकाल्येन प्रवृत्तिरुच्यते । लृट्

वंमानाय स्वाहा संप्लुताय स्वाहा
मेघायिष्यते स्वाहा मेघायते स्वा-
हा मेघिताय स्वाहा मेघाय स्वाहा
नीहाराय स्वाहा निहाकायै स्वाहा
प्रासचाय स्वाहा प्रचलाकायै स्वा-
हा विद्योतिष्यते स्वाहा विद्योतमा-

नायेति सं-प्लवमानाय । स्वाहा । संप्लुतायेति सं-प्लुताय । स्वाहा । मेघायिष्यते । स्वाहा । मेघायत इति मेघ-यते । स्वाहा । मेघिताय । स्वाहा । मेघाय । स्वाहा । नीहाराय । स्वाहा । निहाकाया इति नि-हाकायै । स्वाहा । प्रासचाय । स्वाहा । प्रचलाकाया इति प्र-चलाकायै । स्वाहा । विद्योतिष्यत इति वि-द्योतिष्यते । स्वाहा । वि-

व्यत्ययेन । मेघायिष्यते मेघान् करिष्यते । 'शब्दवैर' इति क्यङ्, व्यत्ययेन परस्मैपदम् । मेघायते मेघमात्मन इच्छते । 'नच्छन्दस्यपुत्रस्य' इतीत्वाभावः । मेघिताय सञ्जातमेघाय । इतच्प्रत्ययः 'तदस्य सञ्जातम्' इति । मेघाय वर्षहेतवे । निहाका नीहारस्य परा काष्ठा यत्र निहततरं कोष्ठं इति प्रयुञ्जते शीतेनार्ताः । तमोभिभूताय प्रासचाय नीहारेण संकुचते यत्र जन्तवः शीतेन संकुचिता भवन्ति, तमसा वा निश्चेष्टाः । स-

नाय स्वाहा संविद्योतमानाय स्वाहा स्तनयिष्यते स्वाहा स्तनयते स्वाहोग्रꣳ स्तनयते स्वाहा वर्षिष्यते स्वाहा वर्षते स्वाहाऽभिवर्षते स्वाहा परिवर्षते स्वाहा संवर्षते ॥३३॥ स्वाहाऽनुवर्षते स्वाहा शीकायिष्यते स्वाहा शीकायते

द्योतमानायेति वि-द्योतमानाय । स्वाहा । संविद्योतमानायेति सं-विद्योतमानाय । स्वाहा । स्तनयिष्यते । स्वाहा । स्तनयते । स्वाहा । उग्रम् । स्तनयते । स्वाहा । वर्षिष्यते । स्वाहा । वर्षते। स्वाहा । अभिवर्षत इत्यभि-वर्षते । स्वाहा । परिवर्षत इति परि-वर्षते । स्वाहा । संवर्षत इति सं-वर्षते ॥ ३३ ॥ स्वाहा । अनुवर्षत इ-

---

वैत्र पृषोदरादित्वादिष्टरूपसिद्धिः । प्रचलाका हेमन्तसमाप्तिकालः यत्रेतश्चेतश्च प्रचलन्ति जन्तवः । यद्वा—प्रकर्षेण चलन्ति । विशीर्य शिष्यन्त इति विद्योतनं विरलद्योतनम् । स्तननं शब्दनम्। उग्रं उद्गूर्णं श्रवणकटुकम् । वर्षणं धारापातनम् । अभिवर्षणं उपर्युपरि वर्षणम् । परिवर्षणं सर्वतो वर्षणम् । संवर्षणं सङ्गतपटलवर्षणम् । अनुवर्षणं स्थित्वास्थित्वा वर्षणम् ॥

स्वाहा शीकिताय स्वाहा प्रोषिष्य-
ते स्वाहा प्रुष्णते स्वाहा परिप्रुष्ण-
ते स्वाहोद्ग्रहीष्यते स्वाहोद्गृह्णते स्वा-
होद्गृहीताय स्वाहा विप्लोष्यते स्वा-
हा विप्लवमानाय स्वाहा विप्लुताय
स्वाहाऽऽतप्स्यते स्वाहाऽऽतपते स्वा-

त्यनु-वर्षते । स्वाहा । [2]शीकायिष्यते । स्वाहा । शीकायत इति शीक-यते । स्वाहा । शीकिताय । स्वाहा । प्रोषिष्यते । स्वाहा । प्रुष्णते । स्वाहा । परिप्रुष्णत इति परि-प्रुष्णते । स्वाहा । उद्ग्रहीष्यत इत्युत्-ग्रहीष्यते । स्वाहा । उद्गृह्णत इत्युत्-गृह्णते । स्वाहा । उद्गृहीतायेत्युत्-गृहीताय । स्वाहा । विप्लोष्यत इति वि-प्लोष्यते । स्वाहा । विप्लवमानायेति वि-प्लवमानाय । स्वाहा । विप्लुता-

---

[2]शीकायिष्यते शीकां करिष्यते वृष्ट्युत्तरकालं सिमसिमसिमाकरणं शीकाकरणम् । अन्य आह—वर्षहेतुकं शैत्यं शीकीकरणमिति । शीकायते शीकमिच्छते । शीकिताय सञ्जातशीकाय । प्रोषणं पूरणादि । पूष प्लुहस्नेहसेचनपूरणेषु । उद्ग्रहणं वर्षस्योपरमः; मेघानां वा वर्षोत्तरकालं ऊर्ध्वनयनम् । संप्लावो मेघानामप्युपरमः । विप्लवः प्रतीपकः । आतपनं रविकिरणैः सर्वतो दाहः । ऋचः पादबद्धा मन्त्राः । अपदानि यजूंषि ।

होग्रमातपते स्वाहर्ग्भ्यस्स्वाहा य-
जुर्भ्यस्स्वाहा सामभ्यस्स्वाहाऽङ्गिरो-
भ्यस्स्वाहा वेदेभ्यस्स्वाहा गाथा-
भ्यस्स्वाहा नाराशꣳसीभ्यस्स्वाहा
रैभीभ्यस्स्वाहा सर्वस्मै स्वाहा॥३४॥

येति वि-प्लुताय । स्वाहा । आतप्स्यत इत्या-त-प्स्यते । स्वाहा । आतपत इत्या-तपते । स्वाहा । उग्रम् । आतपत इत्या-तपते । स्वाहा । ऋग्भ्य इत्यृक्-भ्यः । स्वाहा । यजुर्भ्य इति यजुः-भ्यः । स्वाहा । सामभ्य इति साम-भ्यः । स्वाहा । अ-ङ्गिरोभ्य इत्यङ्गिरः-भ्यः । स्वाहा । वेदेभ्यः । स्वाहा । गाथाभ्यः । स्वाहा । नाराशꣳसीभ्यः । स्वाहा । रैभीभ्यः । स्वाहा । सर्वस्मै । स्वाहा ॥

संवर्षते रैभीभ्यस्स्वाहा द्वे च॥ ११ ॥

---

सामानि गीतयः । अङ्गिरोभिर्दृष्टाः शाखाविशेषा अङ्गिरोविधायकाः । गाथा वैदिकाः श्लोकाः अविधायकाः । नरैः शंसनीया देवताविशेषा नाराशंसाः, तत्सम्बन्धिन्य ऋचो नाराशंस्यः । रेभः शब्दकृदग्निः । तदीया ऋचो रैभ्यः । उत्सादिलक्षणोऽञ् । गोबलीवर्दन्यायेन व्यतिरिक्तविषयः ऋक्छब्दोऽत्र द्रष्टव्यः॥

इति सप्तमे पञ्चमे एकादशोनुवाकः.

दृत्वते स्वाहाऽदन्तकाय स्वाहा प्रा-
णिने स्वाहाऽप्राणाय स्वाहा मुखं-
वते स्वाहाऽमुखाय स्वाहा नासिंक-
वते स्वाहाऽनासिकाय स्वाहाऽक्ष-
ण्वते स्वाहाऽनक्षिकाय स्वाहा क-
र्णिने स्वाहाऽकर्णकाय स्वाहा शी-

[1]दत्वते । स्वाहा । अदन्तकाय । स्वाहा । प्राणिने । स्वाहा । अप्राणाय । स्वाहा । मुखवत इति मुखं-वते । स्वाहा । अमुखाय । स्वाहा । नासिंकवत इति नासिंक-वते । स्वाहा । अनासिकाय । स्वाहा । अक्षण्वत इत्यक्षण्-वते । स्वाहा । अनक्षिकाय । स्वाहा । कर्णिने । स्वाहा । अकर्णकाय । स्वाहा । शीर्षण्वत इति शीर्षण्-वते । स्वाहा । अशी-

[1]पुनरपि नक्तंहोमेष्वेव शरीरहोमाः—दत्वत इत्याद्याः ॥ प्रशंसादिषु मतुप् । नञा च तत्तदपेक्षा प्रतिषिध्यते । देवताभूतस्य दन्ताद्यपेक्षाभावात् । यद्वा—अदन्तकादिबहुप्रकारा । बहुरूपेणाश्वः स्तूयते । दत्वते । 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वं अविभक्तेरपि दृश्यते । यथा 'अवसाय पद्वते रुद्र मृड'* इति । अदन्तकाय । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । एवं सर्वत्र ।

*सं. ७-४-१७.

रृषण्वते स्वाहाऽशीरृषकाय स्वाहा
पद्वते स्वाहाऽपादकाय स्वाहा प्राणते
स्वाहाऽप्राणते स्वाहा वदते स्वाहाऽ-
वदते स्वाहा पश्यते स्वाहाऽपश्य-
ते स्वाहा शृण्वते स्वाहाऽशृण्वते
स्वाहा मनस्विने स्वाहा ॥ ३५ ॥
अमनसे स्वाहा रेतस्विने स्वाहा-

रृषकाय । स्वाहा । पद्वत इति पत्–वते । स्वाहा । अपादकाय । स्वाहा । प्राणत इति प्र–अनते । स्वाहा । अप्राणत इत्यप्र–अनते । स्वाहा । वदते । स्वाहा । अवदते । स्वाहा । पश्यते । स्वाहा । अपश्यते । स्वाहा । शृण्वते । स्वाहा । अशृण्वते । स्वाहा । [2]मनस्विने । स्वाहा ॥ ३५ ॥ अमनसे । स्वाहा । रेतस्विने । स्वाहा । अरेतस्कायेत्यरेतः–

---

नासिकवते । 'ङ्यापोः' इति ह्रस्वत्वम् । अक्षण्वते । 'छन्दस्यपि दृश्यते' इत्यनङि 'अनो नुट्' 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । शीर्षण्वते । 'शीर्षञ्छन्दसि' इति पूर्ववन्नुट्स्वरौ । पद्वते, दत्वत इति वत् । प्राणते । 'शतुरनुमः' इति विभक्त्या उदात्तत्वम् । अप्राणते, अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

[2]मनस्विने । 'अस्मायामेधा' इति विनिः । अमनसे । 'नञ्-

ऽरेतस्काय स्वाहा प्रजाभ्यस्स्वाहा
प्रजननाय स्वाहा लोमवते स्वाहा-
ऽलोमकाय स्वाहा त्वचे स्वाहाऽ-
त्वक्काय स्वाहा चर्मण्वते स्वाहाऽ-
चर्मकाय स्वाहा लोहितवते स्वा-
हाऽलोहिताय स्वाहा मांसन्वते
स्वाहाऽमांसकाय स्वाहा स्नाव-
भ्यस्स्वाहाऽस्नावकाय स्वाहाऽस्थ-

काय । स्वाहा । प्रजाभ्य इति प्र-जाभ्यः । स्वाहा । प्रजननायेति प्र-जननाय । स्वाहा । लोमवत इति लोम-वते । स्वाहा । अलोमकाय । स्वाहा । त्वचे । स्वाहा । अत्वक्काय । स्वाहा । चर्मण्वत इति चर्मण्-वते । स्वाहा । अचर्मकाय । स्वाहा । लोहितवत इति लोहित-वते । स्वाहा । अलोहिताय । स्वाहा । मांसन्वत इति मांसन्-वते । स्वाहा । अमांसकाय । स्वाहा । स्नावभ्य इति स्नाव-भ्यः । स्वाहा । अस्नावकाय । स्वाहा ।

---

सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । त्वचे 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । चर्मण्वते, उक्तौ नुट्स्वरौ । मांसन्वते । छा-

न्वते स्वाहाऽनस्थिकाय स्वाहा म-
ज्जन्वते स्वाहाऽमज्जकाय स्वाहाऽ-
ङ्गिने स्वाहाऽनङ्गाय स्वाहाऽऽत्मने
स्वाहाऽनात्मने स्वाहा सर्वस्मै स्वा-
हा ॥ ३६ ॥

कस्त्वा युनक्ति स त्वा युनक्तु वि-

अस्थन्वत इत्यस्थन्-वते । स्वाहा । अनस्थिका-य । स्वाहा । मज्जन्वत इति मज्जन्-वते । स्वाहा । अमज्जकाय । स्वाहा । अङ्गिने । स्वाहा । अनङ्गा-यं । स्वाहा । आत्मने । स्वाहा । अनात्मने । स्वाहा । सर्वस्मै । स्वाहा ॥ ३६ ॥

मनस्विने स्वाहाऽनात्मने स्वाहा द्वे च ॥१२॥

[1]कः । त्वा । युनक्ति । सः । त्वा । युनक्तु । विष्णुः । त्वा । युनक्तु । अस्य । यज्ञस्य । ऋ-

---

न्दसोऽनङादेशः, स्वरः पूर्ववत् । अस्थन्वते 'छन्दस्यपि दृश्यते' इत्यनङ्, नुट्स्वरौ पूर्ववत् । एवं मज्जन्वते ॥

इति सप्तमे पञ्चमे द्वादशोनुवाकः.

---

[1]अथ परिधिमन्त्रः—कस्त्वेति ॥ तत्रामुष्मै कामायेत्यन्ताः षट् मध्ये । 'आयुषे त्वा' इत्यारभ्य 'रय्यै त्वा' इत्यन्ताः दक्षिणे षट् । शेषाः पञ्च राधसेत्याद्या उत्तरे । कः प्रजापतिरेव त्वा यु-

ष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै म-
ह्यꣳ सन्नत्या अमुष्मै कामायायुषे
त्वा प्राणाय त्वाऽपानाय त्वा व्या-
नाय त्वा व्युष्ट्यै त्वा रय्यै त्वा रा-
धसे त्वा घोषाय त्वा पोषाय त्वा-
ऽऽराद्घोषाय त्वा प्रच्युत्यै त्वा ॥३७॥

ऋद्ध्यै। मह्यम्। सन्नत्या इति सं-नत्यै। अमुष्मै। कामाय। आयुषे। त्वा। प्राणायेति प्र-अनाय। त्वा। अपानायेत्यप-अनाय। त्वा। व्यानायेति वि-अनाय। त्वा। व्युष्ट्या इति वि-उष्ट्यै। त्वा। रय्यै। त्वा। राधसे। त्वा। घोषाय। त्वा। पोषाय। त्वा। आराद्घोषायेत्याराद्-घोषाय। त्वा। प्रच्युत्या इति प्र-च्युत्यै। त्वा ॥ ३७ ॥

कौष्ठात्रिꣳशत् ॥ १३ ॥

---

नक्ति योक्तुमर्हति । तस्मात् स एव त्वा युनक्तु यस्तस्यापि योक्ता अस्य यज्ञस्य समृद्ध्यै मम च सन्तत्यै सर्वो मां प्रति सन्नमेदिति अमुष्मै कामाय प्रजायै वा । अमुष्मा इत्यत्राभीष्टः कामो निर्देष्टव्यः । राधोऽन्नम् । घोषः कीर्तिः । पोषः पश्वादेः । आरात्घोषः आरात् शब्दग्राहित्वम् । प्रच्युतिः सर्वदुःखनिवृत्तिः; प्रकृष्टा वा च्युतिर्गतिः स्वर्गाख्या ॥

इति सप्तमे पञ्चमे त्रयोदशोनुवाकः.

अग्नये गायत्राय त्रिवृते राथन्तरा-
य वासन्तायाष्टाकपाल इन्द्राय त्रै-
ष्टुभाय पञ्चदशाय बार्हताय ग्रैष्मा-
यैकादशकपालो विश्वेभ्यो देवेभ्यो
जागतेभ्यस्सप्तदशेभ्यो वैरूपेभ्यो वा-
र्षिकेभ्यो द्वादशकपालो मित्रावरु-

[1]अग्नये । गायत्राय । त्रिवृत इति त्रि—वृते । राथन्तरायेति राथं—तराय । वासन्ताय । अष्टाकपाल इत्यष्टा—कपालः । इन्द्राय । त्रैष्टुभाय । पञ्चदशायेति पञ्च—दशाय । बार्हताय । ग्रैष्माय । एकादशकपाल इत्येकादश—कपालः । विश्वेभ्यः । देवेभ्यः । जागतेभ्यः । सप्तदशेभ्य इति सप्त—दशेभ्यः । वैरूपेभ्यः । वार्षिकेभ्यः । द्वादशकपाल इति द्वादश—कपालः । मित्रावरुणाभ्यामिति मि-

---

[1]अथ तत्रैव दशहविषमिष्टिं विदधाति—अग्नये गायत्रायेति ॥ देवतया छन्दसा स्तोमेन साम्ना ऋतुना विशेष्यते । सहोत्पत्त्यादिकृतः सम्बन्धविशेषः सर्वत्राग्न्यादीनां; गायत्र्यादीनां च क्वचित्प्राथम्यादिकृतश्च । सर्वत्राद्युदात्ता उत्साद्यन्ता द्रष्टव्याः । अन्ये एताः पञ्चदशादयः 'स्तोमे डविधिः' इति डान्ताः । ऋतुभ्यः ऋत्वण् । वसन्तात्तु 'सर्वत्राण्च' इति चकारात् । अष्टाकपालादयः तद्धितार्थे द्विगवः । 'अध्यर्धपूर्वाद्द्विगोः' इति प्रत्य-

णाभ्यामानुष्टुभाभ्यामेकवि॒ꣳशाभ्यां
वैरा॒जाभ्याꣳ शार॒दाभ्यां पय॒स्यां
बृह॒स्पतये॒ पाङ्क्ताय त्रिण॒वाय शाक्व॒-
राय॒ हैमन्तिकाय च॒रुस्सवि॒त्र आति-
च्छन्द॒साय त्रयस्त्रि॒ꣳशाय रैव॒ताय
शैशि॒राय॒ द्वादशकपा॒लोऽदित्यै॒ वि-
ष्णुपत्न्यै च॒रुर॒ग्नये वैश्वा॒नराय॒ द्वा-

त्रा-वरुणाभ्याम् । आनुष्टुभाभ्यामित्यानु-स्तुभा॒भ्याम् । एकवि॒ꣳशाभ्या॒मित्येक-वि॒ꣳशाभ्याम् । वै॒राजाभ्याम् । शा॒र॒दाभ्याम् । [2]प॒य॒स्यां । बृ॒ह॒स्प-तये । पाङ्क्ताय । त्रि॒ण॒वायेति त्रि-न॒वाय । शा॒क्व॒राय । हैमन्तिकाय । च॒रुः । सा॒वि॒त्रे । आ॒ति॒च्छन्द॒-सायेत्याति-छ॒न्द॒साय । त्र॒य॒स्त्रि॒ꣳशायेति त्रयः-त्रि॒ꣳशाय । रै॒व॒ताय । शै॒शि॒राय । द्वादशकपा॒ल इति॒ द्वादश-क॒पा॒लः । अदित्यै । विष्णुपत्न्या इ॒-ति॒ विष्णु-प॒त्न्यै॒ । च॒रुः । अ॒ग्नये । वै॒श्वा॒न॒राय ।

---

यस्य लुकि ‘ इगन्तकाल ’ इति पूर्वपदप्रकृतिस्वरत्वम् । वार्षि-केभ्यः । ‘ छन्दसि ठञ् ’ इति ठञ् ॥

[2]पयस्या पयसि आमिक्षा । बृहस्पतिः । पारस्करादिः । हैमन्तिकाय ‘ हेमन्ताच्च ’ इति ठञ् । सवित्रे, ‘ उदात्तयणः ’

दशकपालोऽनुमत्यै चरुः काय ए-
ककपालः ॥ ३८ ॥
यो वा अग्नावग्निः प्रह्रियते यश्च
सोमो राजा तयोरेष आतिथ्यं यद-
ग्नीषोमीयोऽथैष रुद्रो यश्चीयते य-
थ्संचितेऽग्नावेतानि हवीꣳषि न नि-

द्वादशकपाल इति द्वादश–कपालः । अनुमत्या इत्यनु–मत्यै । चरुः । कायः । एककपाल इत्येक–कपालः ॥ ३८ ॥

अग्नयेऽदित्या अनुमत्यै सप्तचत्वारिꣳशत्॥१४॥

[1]यः । वै । अग्नौ । अग्निः । प्रह्रियत इति प्र–ह्रियते । यः । च । सोमः । राजा । तयोः । एषः । आतिथ्यम् । यत् । अग्नीषोमीय इत्यग्नी–सोमीयः । अथ । एषः । रुद्रः । यः । चीयते । यत् ।

---

इति चतुर्थ्या उदात्तत्वम् । विष्णुपत्न्यै, 'विभाषा सपूर्वस्य' इति बहुव्रीहौ ङीब्नकारौ । कायः, 'कस्येत्' ॥

इति सप्तमे पञ्चमे चतुर्दशोनुवाकः.

---

[1]अथैषां ब्राह्मणं—यो वा इत्यादि ॥ योऽयमग्नावग्निं मथित्वा प्रणीयते यश्च सोमो राजा तयोरेष आतिथ्यं योऽग्नीषोमीयपशुः ।

वर्पेदेष एव रुद्रोऽशान्त उपोत्थायं
प्रजां पशून् यजमानस्याभि मन्येत
यथ्संचितेऽग्नावेतानि हवीꣳषि नि-
र्वपति भागधेयेनैवैनꣳ शमयति ना-
स्य रुद्रोऽशान्तः ॥ ३१ ॥ उपोत्था-
यं प्रजां पशूनभि मन्यते दश ह-

सञ्चित इति सं–चिते । अग्नौ । एतानि । हवीꣳ-
षि । न । निर्वपेदिति निः–वपेत् । एषः । एव ।
रुद्रः । अशान्तः । उपोत्थायेत्युप–उत्थाय । प्र-
जामिति प्र–जाम् । पशून् । यजमानस्य । अभी-
ति । मन्येत । यत् । सञ्चित इति सं–चिते । अ-
ग्नौ । एतानि । हवीꣳषि । निर्वपतीति निः–वप-
ति । भागधेयेनेति भाग–धेयेन । एव । एनम् ।
शमयति । न । अस्य । रुद्रः । अशान्तः ॥ ३१ ॥
उपोत्थायेत्युप–उत्थाय । प्रजामिति प्र–जाम् ।
पशून् । अभीति । मन्यते । [2]दश । हवीꣳषि ।

अथैष इत्यादि । एतानि हवींषि 'अग्नये गायत्राय'* इत्यादी-
नि । अशान्तः क्रुद्धः अभिमन्येत नाशयेत् ॥

[2]दश हवींषीत्यादि ॥ गतम् ॥

*सं. ७-५-१४.

वीꣳषि भवन्ति नव वै पुरुषे प्राणा
नाभिर्दशमी प्राणानेव यजमाने द-
धात्यथो दशाक्षरा विराडन्नं विराड्विरा-
ज्येवान्नाद्ये प्रति तिष्ठत्यृतुभिर्वा ए-
ष छन्दोभिस्स्तोमैः पृष्ठैश्चेतव्य इ-
त्याहुर्यदेतानि हवीꣳषि निर्वपत्यृतु-

भवन्ति । नव । वै । पुरुषे । प्राणा इति प्र—अ-
नाः । नाभिः । दशमी । प्राणानिति प्र—अनान् ।
एव । यजमाने । दधाति । अथो इति । दशाक्षरे-
ति दश—अक्षरा । विराडिति वि—राट् । अन्नम् ।
विराडिति वि—राट् । विराजीति वि—राजि । एव ।
अन्नाद्य इत्यन्न—अद्ये । प्रतीति । तिष्ठति । [3]ऋतु-
भिरित्यृतु—भिः । वै । एषः । छन्दोभिरिति छन्दः—
भिः । स्तोमैः । पृष्ठैः । चेतव्यः । इति । आहुः । यत् ।
एतानि । हवीꣳषि । निर्वपतीति निः—वपति ।
ऋतुभिरित्यृतु—भिः । एव । एनम् । छन्दोभिरिति

[3]ऋतुभिर्वा इत्यादि ॥ एषां हविषां निर्वापेन ऋत्वादिभिः एष चितो भवतीति । दिश इत्यादि । सुषुवाणेन सोमं सुतवता, ऐश्वर्यप्राप्तेन वा । अभिजित्या इत्यादि । अभिजेतव्याः । छान्दसः

भिरेवैनं छन्दोभिस्स्तोमैः पृष्ठैश्चिनुते दिशस्सुषुवाणेन ॥ ४० ॥ अभिजित्या इत्याहुर्यदेतानि हवीꣳषि निर्वपति दिशामभिजित्या एतया वा इन्द्रं देवा अयाजयन्तस्मादिन्द्रसव एतया मनुं मनुष्यास्तस्मान्म-

छन्दः–भिः । स्तोमैः । पृष्ठैः । चिनुते । दिशः । सुषुवाणेन ॥ ४० ॥ अभिजित्या इत्यभि–जित्याः । इति । आहुः । यत् । एतानि । हवीꣳषि । निर्वपतीति निः–वपति । दिशाम् । अभिजित्या इत्यभि–जित्यै । [4]एतया । वै । इन्द्रम् । देवाः । अयाजयन् । तस्मात् । इन्द्रसव इतीन्द्र–सवः । एतया । मनुम् । मनुष्याः । तस्मात् । मनुसव इति

---

क्यप्, कृदुत्तरपदप्रकृतिस्वरत्वम् । अभिजित्यै, 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[4]एतया वा इत्यादि ॥ गतम् । मनुष्याः अयाजयन्नित्येव । दिग्वतीः दिक्शब्दवत्यः 'समिद्दिशामाशया नः'* इत्याद्याः ॥

इति सप्तमे पञ्चमे पञ्चदशोनुवाकः.

---

*सं. ४-४-१२.

नुसवो यथेन्द्रो देवानां यथा मनु-
र्मनुष्याणामेवं भवति य एवं वि-
द्वानेतयेष्ट्या यजते दिग्वतीः पुरो-
नुवाक्या भवन्ति सर्वासां दिशाम-
भिजित्यै ॥ ४१ ॥

यः प्राणतो निमिषतो महित्वैक इ-
द्राजा जगतो बभूव । य ईशे अ-

मनु–सवः । यथा । इन्द्रः । देवानाम् । यथा । मनुः । मनुष्याणाम् । एवम् । भवति । यः । एवम् । विद्वान् । एतया । इष्ट्या । यजते । दिग्वतीरिति दिक्–वतीः । पुरोनुवाक्या इति पुरः–अनुवाक्याः । भवन्ति । सर्वासाम् । दिशाम् । अभिजित्या इत्यभि–जित्यै ॥ ४१ ॥

अशान्तस्सुषुवाणेनैकचत्वारिꣳशच्च ॥१५॥

[1]यः । प्राणत इति प्र–अनतः । निमिषत इति नि–मिषतः । महित्वेति महि–त्वा । एकः । इत् ।

---

[1]अथ वर्णेन महिमानं गृह्णाति—यः प्राणत इति त्रिष्टुभा उपरिष्टादुपयामया ॥ इयं च व्याख्याता 'ऊर्ध्वा अस्य समिधः'*

*सं. ४-१-८.

स्य द्विपदश्चतुष्पदः कस्मै देवाय ह-
विषा विधेम । उपयामगृहीतोसि
प्रजापतये त्वा जुष्टं गृह्णामि तस्य
ते द्यौर्महिमा नक्षत्राणि रूपमादि-
त्यस्ते तेजस्तस्मै त्वा महिम्ने प्रजा-
पतये स्वाहा ॥ ४२ ॥

राजा । जगतः । बभूव । यः । ईशे । अस्य । द्वि-
पद इति द्वि-पदः । चतुष्पद इति चतुः-पदः ।
कस्मै । देवाय । हविषा । विधेम । उपयामगृहीत
इत्युपयाम-गृहीतः । असि । प्रजापतय इति प्र-
जा-पतये । त्वा । जुष्टम् । गृह्णामि । तस्य । ते ।
द्यौः । महिमा । नक्षत्राणि । रूपम् । आदित्यः ।
ते । तेजः । तस्मै । त्वा । महिम्ने । प्रजापतय इति
प्रजा-पतये । स्वाहा ॥ ४२ ॥

यः प्राणतो द्यौरादित्योष्टात्रिंशत् ॥१६॥

---

इत्यत्र । यः प्राणतो निमिषतश्च जगतो निजमाहात्म्येन य एक एव राजा बभूव, यश्चेष्टे अस्य द्विपदः चतुष्पदः कस्मै अज्ञातव्रतस्वभावाय देवाय हविषा परिचरेम । उपयामः पृथिवी । तयैव गृहीतोसि । प्रजापतये जुष्टं प्रियं च गृह्णामि । तस्य ते द्यौर्महिमा द्यौरिव महांस्त्वमसि । नक्षत्राणि तव रूपं तव बि-

य आत्मदा बलदा यस्य विश्वं उ-
पासंते प्रशिषं यस्यं देवाः । यस्यं
छायाऽमृतं यस्यं मृत्युः कस्मैं देवा-
यं हविषां विधेम । उपयामगृहीतो-
सि प्रजापतये त्वा जुष्टं गृह्णामि त-

[1]यः । आत्मदा इत्यात्म—दाः । बलदा इति बल—दाः । यस्यं । विश्वें । उपासत इत्युंप—आ-संते । प्रशिषमिति प्र—शिषम् । यस्यं । देवाः । य-स्यं । छाया । अमृतम् । यस्यं । मृत्युः । कस्मैं । देवायं । हविषां । विधेम । उपयामगृहीत इत्युंप-याम—गृहीतः । असि । प्रजापतय इति प्रजा—

भ्रति । एतावन्ति वा तव रूपाणि । आदित्यस्ते तेजः आदि-त्योपि त्वया तेजस्वी भवति । एवं गृहीत्वा जुहोति । तस्मै ता-दृशाय महिमवते प्रजापतये त्वा जुहोमीति स्वाहुतं करोमीति ॥

इति सप्तमे पञ्चमे षोडशोनुवाकः.

[1]द्वितीयं महिमानं गृह्णाति—य आत्मदा इति त्रिष्टुभा उप-रिष्टादुपयामया ॥ इयमपि तत्रैव व्याख्याता* । य आत्मदाः सर्वस्मै बलदाश्च यस्य प्रशिषं प्रकृष्टामाशिषं विश्वेऽप्युपासते देवा

*सं. ४-१-८.

स्यं ते पृथिवी महिमौषधयो वन-
स्पतयो रूपमग्निस्ते तेजस्तस्मै त्वा
महिम्ने प्रजापतये स्वाहा ॥ ४३ ॥
आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जाय-
तामाऽस्मिन्राष्ट्रे राजन्य इषव्यश्शूरो

पतये । त्वा । जुष्टम् । गृह्णामि । तस्य । ते । पृ-
थिवी । महिमा । ओषधयः । वनस्पतयः । रूपम् ।
अग्निः । ते । तेजः । तस्मै । त्वा । महिम्ने । प्र-
जापतय इति प्रजा—पतये । स्वाहा ॥ ४३ ॥

य आत्मदाः पृथिव्यग्निरेकान्न चत्वारिंशत् ॥१७॥

[1]एति । ब्रह्मन् । ब्राह्मणः । ब्रह्मवर्चसीति ब्रह्म—
वर्चसी । जायताम् । एति । अस्मिन् । राष्ट्रे । रा-

---

अपि यस्य प्रशिषमुपासते अमृतं मृत्युश्च यस्य छायेव विधेया। कस्मा इत्यादि । गतम् । तस्य ते पृथिवी महिमा पृथिवीव महांस्त्वमोषधयो वनस्पतयः तव रूपम् । अग्निस्तव तेज इति गृहीत्वा जुहोति । तस्मा इत्यादि । गतम् ॥

इति सप्तमे पञ्चमे सप्तदशोनुवाकः.

---

[1]अथ ब्रह्मवर्चसं उपजुहोति—आ ब्रह्मन्नित्यादि ॥ ब्रह्मन् ब्रह्मणि ब्राह्मणजातौ अस्य यजमानस्य सम्बन्धी सर्वो ब्राह्मणो ब-

महार॒थो जा॑यतां॒ दोग्ध्रीं॑ धे॒नुर्वोढा॑ऽ-
न॒ड्वाना॒शुस्सप्तिः॒ पुरं॑न्धि॒र्योषा॑ जि॒-
ष्णू र॑थे॒ष्ठास्स॒भेयो॒ यु॒वाऽस्य यज॑-
मानस्य वी॒रो जा॑यतां निका॒मेनि॑-

ज॒न्यः॑ । इ॒ष॒व्यः॑ । शूरः॑ । म॒हा॒र॒थ इति॑ महा–
र॒थः । जा॒य॒ता॒म् । दोग्ध्री॑ । धे॒नुः । वोढा॑ । अ॒न॒-
ड्वान् । आ॒शुः । सप्तिः॑ । पुरं॑न्धिः । योषा॑ । जि॒ष्णुः ।
र॒थे॒ष्ठा इति॑ र॒थे–स्थाः । स॒भेयः॑ । यु॒वा । एति॑ । अ॒-

---

ह्मवर्चसी आजायताम् । अस्मिन्राष्ट्रे यजमानस्य सम्बन्धी राजन्यः सर्वोपि क्षत्रः इषव्यः इष्वादिषु साधुः शूरः महावीरः महारथः रथचर्यायां प्रकृष्टश्च आजायताम् । 'राजश्वशुराद्यत्' 'राज्ञोपत्ये जातिग्रहणम्'। दोग्ध्री बहुक्षीरा सुदोहा च धेनुराजायतां अस्य यजमानस्य । साधुकारिणि तृन् । वोढा साधुवाही अनड्वानाजायतम् । आशुश्शीघ्रगतिः सप्तिराजायताम् । पुरन्धिः रूपवती पुरं शरीरं धीयतेऽस्यामिति । 'कर्मण्यधिकरणे च' इति किः । पूर्वपदस्याम्भावश्छान्दसः । दासीभारादिः । पुरुभिर्वा ध्यातव्या पुरन्धिः । पृषोदरादिः । ईदृशी योषा योषित् अस्य यजमानस्य आजायताम् । जिष्णुः जयशीलः रथेष्ठाः रथे स्थातुं शक्तः । रथे तिष्ठति सङ्ग्रामेष्विति 'सुपि स्थः' इति कः, 'तत्पुरुषे कृति बहुलम्' इत्यलुक्, वचनव्यत्ययः । सभेयः सभायां साधुः रूपवत्तया, 'ढश्छन्दसि' इति ढः । युवा तरुणः । वीरः विक्रान्तः । एवं जिष्णुत्वादिगुणयुक्तः पुरुषोस्य यज-

कामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥ ४४ ॥

आऽक्रान् वाजी पृथिवीमग्निं युज-

स्य । यजमानस्य । वीरः । जायताम् । निकामे-निकाम इति निकामे-निकामे । नः । पर्जन्यः । वर्षतु । फलिन्यः । नः । ओषधयः । पच्यन्ताम् । योगक्षेम इति योग-क्षेमः । नः । कल्पताम् ॥ ४४ ॥

आ ब्रह्मन्नेकंचत्वारिंशत् ॥ १८ ॥

[1]एति । अक्रान् । वाजी । पृथिवीम् । अग्निम् ।

---

मानस्य आजायताम् । निकामेनिकामे इच्छायां नः अस्माकं पर्जन्यो वर्षतु । फलिन्यः बहुफला ओषधयः अस्माकं राष्ट्रे पच्यन्ताम् । कर्मकर्तरि यत् । योगसहितः क्षेमः योगक्षेमः । शाकपार्थिवादित्वादुत्तरपदलोपी समासः । इतरेतरयोगद्वन्द्वे वा वचनव्यत्ययः । समाहारद्वन्द्वे वा लिङ्गव्यत्ययः । योगश्च क्षेमश्चास्मिन् राष्ट्रे प्रजानां कल्पतां सम्पद्यताम् । अलब्धलाभो योगः । लब्धस्य परिपालनं क्षेमः ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये सप्तमे काण्डे पञ्चमे प्रश्ने अष्टादशोनुवाकः.*

---

[1]अथाश्वानुमन्त्रणम् । तथा च ब्राह्मणम्—'आऽक्रान् वाजी क्रमै-

---

*इतः पराणामनुवाकानां भट्टभास्करीयभाष्यानुपलब्धेः माधवीयमेव योजितम्.

मकृत वाज्यर्वाऽक्रान्‌ वाज्यन्तरिक्षं
वायुं युजंमकृत वाज्यर्वा द्यां वा-
ज्याऽक्रꣳस्त सूर्यं युजंमकृत वाज्य-
र्वाऽग्निस्ते वाजिन्‌ युङ्ङनु त्वाऽऽरंभे
स्वस्ति मा सं पारय वायुस्ते वा-
जिन्‌ युङ्ङनु त्वाऽऽरंभे स्वस्ति मा
सम्‌ ॥ ४५ ॥ पारयादित्यस्ते वा-

युजंम्‌ । अकृत । वाजी । अर्वा । एति । अक्रान्‌ । वाजी । अन्तरिक्षम्‌ । वायुम्‌ । युजंम्‌ । अकृत । वाजी । अर्वा । द्याम्‌ । वाजी । एति । अक्रꣳस्त । सूर्यंम्‌ । युजंम्‌ । अकृत । वाजी । अर्वा । अग्निः । ते । वाजिन्न्‌ । युङ्ङ् । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति । पारय । वायुः । ते । वाजिन्न्‌ । युङ्ङ् । अन्विति । त्वा । एति । रभे । स्वस्ति । मा । समिति ॥ ४५ ॥ पारय ।

रत्यक्रमीद्वाजी द्यौस्ते पृष्ठं पृथिवी सधस्थमित्यश्वमनुमन्त्रयते '* इति । एतेषु त्रिषु मन्त्रेषु प्रथमं मन्त्रं पठति—आऽक्रान्‌ वाजीति ॥ वाजी वेगवानयमश्वः पृथिवीं आक्रान्‌ आक्रान्तवान्‌ । सोऽर्वा तस्यां पृथिव्यां अग्निं युजं योजयितारं व्यवहारनिर्वाहकं अकृत । एवमुत्तर-

*ब्रा. ३-९-४.

जिन् युङ्क्तु त्वाऽऽरभे स्वस्ति मा सं
पारय प्राणधृगसि प्राणं मे दृꣳह
व्यानधृगसि व्यानं मे दृꣳहापान-
धृगस्यपानं मे दृꣳह चक्षुरसि चक्षु-
र्मयि धेहि श्रोत्रमसि श्रोत्रं मयि
धेह्यायुरस्यायुर्मयि धेहि ॥ ४६ ॥

आदित्यः। ते। वाजिन्न्। युङ्क्। अन्विति। त्वा। एति। रभे। स्वस्ति। मा। समिति। पारय। प्राणधृगिति प्राण-धृक्। असि। प्राणमिति प्र-अनम्। मे। दृꣳह। व्यानधृगिति व्यान-धृक्। असि। व्यानमिति वि-अनम्। मे। दृꣳह। अपानधृगित्यपान-धृक्। असि। अपानमित्यप-अनम्। मे। दृꣳह। चक्षुः। असि। चक्षुः। मयि। धेहि। श्रोत्रम्। असि। श्रोत्रम्। मयि। धेहि। आयुः। असि। आयुः। मयि। धेहि॥ ४६ ॥

वायुस्ते वाजिन् युङ्क्तु त्वाऽऽरभे स्वस्ति मा सं
त्रिचत्वारिꣳशच्च ॥ १९ ॥

---

त्रापि योज्यम्। हे वाजिन् अग्निः ते युङ् तव योजयिता सहायभूतः तस्मात् त्वां अन्वारभे। त्वं च स्वस्ति विनाशराहित्येन मां सम्पारय सम्यक् कर्मसमाप्तिं प्रापय। एवमुत्तरत्रापि योज्यम्।

जज्ञि बीजं वर्ष्टा पर्जन्यः पक्ता सस्यꣳ सुपिप्पला ओषधयस्स्वधिचरणेयꣳ सूपसदनोग्निस्स्वध्यक्षमन्तरिक्षꣳ सुपावः पवमानस्सूपस्था-

[1]जज्ञि । बीजम् । वर्ष्टा । पर्जन्यः । पक्ता । सस्यम् । सुपिप्पला इति सु-पिप्पलाः । ओषधयः । स्वधिचरणेति सु-अधिचरणा । इयम् । सूपसदन इति सु-उपसदनः । अग्निः । स्वध्यक्षमिति सु-अध्यक्षम् । अन्तरिक्षम् । सुपाव इति

---

प्राणं दृंहति दृढीकरोतीति प्राणधृक् । हे अश्व त्वं तादृशोऽसि अतो मे प्राणं दृढीकुरु । एवमुत्तरत्रापि । हे अश्व त्वं चक्षुरसि अतो मयि चक्षुः स्थापय । एवमुत्तरत्रापि ॥

इति माधवीये सप्तमे पञ्चमे एकोनविंशोनुवाकः.

---

[1]अथान्ये अन्नहोममन्त्रा उच्यन्ते । तथा च ब्राह्मणम्— ‘जज्ञि बीजमिति जुहोत्यनन्तरित्यै ’* इति । जज्ञीति ॥ यदेतत् व्रीह्यादिबीजं तत् जज्ञि जननस्वभावमस्तु । अस्त्विति सर्वत्राध्याहारः । पर्जन्यो वर्ष्टा वृष्टिकारोस्तु । सस्यं पक्ता पाकशीलम् । ओषधयश्च सुपिप्पलाः शोभनफलाः । इयं पृथिवी स्वधिचरणा सुखेनाधिष्ठाय चरितुं शक्या । अग्निः सूपसदनः सु-

*ब्रा. ३-८-१८.

ना द्यौश्शिवमसौ तपन्न् यथापूर्व-
मंहोरात्रे पंञ्चदशिनोऽर्धमासास्त्रिꣳ-
शिनो मासाः क्लृप्ता ऋतवंश्शान्त-
स्संवथ्सरः ॥ ४७ ॥

सु–पावः । पवंमानः । सूपस्थानेतिं सु–उपस्था-
ना । द्यौः । शिवम् । असौ । तपन्न् । यथापूर्वमितिं
यथा–पूर्वम् । अहोरात्रे इत्यंहः–रात्रे । पञ्चदशिन
इतिं पञ्च–दशिनंः । अर्धमासा इत्यंर्ध–मासाः ।
त्रिꣳशिनंः । मासाः । क्लृप्ताः । ऋतवंः । शान्तः ।
संवत्सर इतिं सं–वत्सरः ॥ ४७ ॥
जज्ञयेकंत्रिꣳशत् ॥ २० ॥

---

खेनोपसत्तुं परिचरितुं शक्यः । अन्तरिक्षं स्वध्यक्षं सुखेनाध्यक्षितव्यं धूमकेत्वाद्युत्पातरहितमित्यर्थः । पवमानः वायुः सुपावः अनुपद्रवकारी सञ्चारयुक्तः । द्यौः सूपस्थाना सुखेनावस्थातुं शक्या दैविकोपद्रवरहितेत्यर्थः । असौ आदित्यः शिवं उपद्रवराहित्यं यथा भवति तथा तपन् वर्तताम् । अहोरात्रे यथापूर्वं कल्पादेवारभ्य येन क्रमेण प्रवृत्ते तथैवाद्यापि प्रवर्तेताम् । अर्धमासाः न्यूनाधिकराहित्येन पञ्चदशदिनयुक्ताः । तथा मासाः त्रिंशद्दिनयुक्ताः । ऋतवः क्लृप्ताः तत्तल्लक्षणोपेताः । संवत्सरः शान्तः प्रजापीडारहितः । एतैः पञ्चदशभिर्मन्त्रैः अन्नहोमाः कर्तव्याः ॥

इति माधवीये सप्तमे पञ्चमे विंशोनुवाकः.

आग्नेयोऽष्टाकपालस्सौम्यश्चरुस्सावि-
त्रोऽष्टाकपालः पौष्णश्चरू रौद्रश्चरुर-
ग्नये वैश्वानराय द्वादशकपालो मृ-
गाखरे यदि नागच्छेदग्नयेऽꣳहोमुचेऽ-
ष्टाकपालस्सौर्यं पयो वायव्य आ-
ज्यभागः ॥ ४८ ॥

[1]आग्नेयः । अष्टाकपाल इत्यष्टा–कपालः । सौम्यः । चरुः । सावित्रः । अष्टाकपाल इत्यष्टा–कपालः । पौष्णः । चरुः । रौद्रः । चरुः । अग्नये । वैश्वानराय । द्वादशकपाल इति द्वादश–कपालः । मृगाखर इति मृग–आखरे । यदि । न । आगच्छेदित्या–गच्छेत् । अग्नये । अꣳहोमुच इत्यꣳहः–मुचे । अष्टाकपाल इत्यष्टा–कपालः । सौर्यम् । पयः । वायव्यः । आज्यभाग इत्याज्य–भागः ॥४८॥

आग्नेयश्चतुर्विꣳशतिः ॥ २१ ॥

---

[1]अथाश्वस्य रोगादिनिमित्ते प्राप्ते प्रायश्चित्तेष्टय उच्यन्ते । तथा च ब्राह्मणम्—‘ यद्यश्वमुपतपाद्विन्देत् । आग्नेयमष्टाकपालं निर्वपेत् । ’* इत्यादि । आग्नेय इति ॥ मृगाखरे अश्वनिवासस्थाने यदि नागच्छेत् तत्रानागमनमेकं निमित्तं, निमित्तान्तराणि तु ब्राह्मणे द्रष्टव्यानि । तान्येतानि नव हवींषि प्रायश्चित्तरूपाणि ॥

इति माधवीये सप्तमे पञ्चमे एकविंशोनुवाकः.

---

*ब्रा. ३-९-१७.

अग्नयेऽꣳहोमुचेऽष्टाकपाल इन्द्राया-
ꣳहोमुच एकादशकपालो मित्राव-
रुणाभ्यामागोमुग्भ्यां पयस्या वायो-
सावित्र आगोमुग्भ्यां चरुरश्विभ्या-
मागोमुग्भ्यां धाना मरुद्भ्य एनोमु-
ग्भ्यस्सप्तकपालो विश्वेभ्यो देवेभ्य
एनोमुग्भ्यो द्वादशकपालोनुमत्यै च-

[1]अग्नये । अꣳहोमुच इत्यꣳहः–मुचे । अष्टाकपाल इत्यष्टा–कपालः । इन्द्राय । अꣳहोमुच इत्यꣳहः–मुचे । एकादशकपाल इत्येकादश–कपालः । मित्रावरुणाभ्यामिति मित्रा–वरुणाभ्याम् । आगोमुग्भ्यामित्यागोमुक्–भ्याम् । पयस्या । वायोसावित्र इति वायो–सावित्रः । आगोमुग्भ्यामित्यागोमुक्–भ्याम् । चरुः । अश्विभ्यामित्यश्वि–भ्याम् । अगोमुग्भ्यामित्यागोमुक्–भ्याम् । धानाः । मरुद्भ्य इति मरुत्–भ्यः । एनोमुग्भ्य इत्येनोमुक्–भ्यः । सप्तकपाल इति सप्त–कपालः । विश्वेभ्यः । देवेभ्यः ।

[1]यदुक्तं सूत्रकारेण 'अग्नयेऽꣳहोमुचेऽष्टाकपाल इति दशहविषं मृगारेष्टिमनु निर्वपति' इति तदेतद्विधत्ते—अंहसो मोचयतीति अंहोमुक् । आगसो मोचयत इति आगोमुचौ वायुश्च सविता च

रुरग्नये वैश्वानराय द्वादशकपालो द्यावापृथिवीभ्यामꣳहोमुग्भ्यां द्विकपालः ॥ ४१ ॥

अग्नये समनमत्पृथिव्यै समनमद्य-

एनोमुग्भ्य इत्येनो मुक्–भ्यः । द्वादशकपाल इति द्वादश–कपालः । अनुमत्या इत्यनु–मत्यै । चरुः । अग्नये । वैश्वानराय । द्वादशकपाल इति द्वादश–कपालः । द्यावापृथिवीभ्यामिति द्यावा–पृथिवीभ्याम् । अꣳहोमुग्भ्यामित्यꣳहोमुक्–भ्याम् । द्विकपाल इति द्वि–कपालः ॥ ४१ ॥

अग्नयेऽꣳहोमुचे त्रिꣳशत् ॥ २२ ॥

[1]अग्नये । समिति । अनमत् । पृथिव्यै । समिति । अनमत् । यथा । अग्निः । पृथिव्या । समन-

---

वायोसावित्रः वायुसवितृभ्यामित्यर्थः । धानाः भ्रष्टयवाः । एनसो मोचयन्तीति एनोमुचः ॥

इति माधवीये सप्तमे पञ्चमे द्वाविंशोनुवाकः.

---

[1]अथ सन्नतिहोमा उच्यन्ते । तथा च ब्राह्मणम्—' अग्नये समनमत्पृथिव्यै समनमदिति सन्नतिहोमान् जुहोति '* इति ।

---

*ब्रा. ३-८-१८.

थाऽग्निः पृथिव्या समनमदेवं मह्यं
भद्रास्संनतयस्सं नमन्तु वायवे स-
मनमदन्तरिक्षाय समनमद्यथा वा-
युरन्तरिक्षेण सूर्याय समनमद्दिवे
समनमद्यथा सूर्यो दिवा चन्द्रमसे
समनमन्नक्षत्रेभ्यस्समनमद्यथा च-
न्द्रमा नक्षत्रैर्वरुणाय समनमदद्भ्य-

मदिति सं–अनमत् । एवम् । मह्यम् । भद्राः । संनतय इति सं–नतयः । समिति । नमन्तु । वायवे । समिति । अनमत् । अन्तरिक्षाय । समिति । अनमत् । यथा । वायुः । अन्तरिक्षेण । सूर्याय । समिति । अनमत् । दिवे । समिति । अनमत् । यथा । सूर्यः । दिवा । चन्द्रमसे । समिति । अनमत् । नक्षत्रेभ्यः । समिति । अनमत् । यथा । चन्द्रमाः । नक्षत्रैः । वरुणाय । समिति । अनमत् । अद्भ्य इत्यत्–भ्यः । समिति । अन-

---

अग्नय इति ॥ सर्वोऽपि यजमानः अग्नये समनमत् सन्नतिं परिचर्यामकरोत् । तथा पृथिव्यै समनमत् परिचर्यामकरोत् । स च पृथिव्या सहितोऽग्निः यथा समनमत् येन प्रकारेण तस्मै यजमा-

स्समंनमद्यथा ॥ ५० ॥ वरुणोद्भि-
स्साम्ने समंनमदृचे समंनमद्यथा
सामर्चा ब्रह्मंणे समंनमत्क्षत्राय
समंनमद्यथा ब्रह्म क्षत्रेण राज्ञे स-
मंनमद्विशे समंनमद्यथा राजा विशा
रथाय समंनमदश्वेभ्यस्समंनमद्य-
था रथोश्वैः प्रजापंतये समंनमद्भूते-

मत् । यथा ॥ ५० ॥ वरुणः । अद्भिरित्यंत्–भिः । साम्ने । समिति । अनमत् । ऋचे । समिति । अनमत् । यथा । साम । ऋचा । ब्रह्मंणे । समिति । अनमत् । क्षत्राय । समिति । अनमत् । यथा । ब्रह्म । क्षत्रेण । राज्ञे । समिति । अनमत् । विशे । समिति । अनमत् । यथा । राजा । विशा । रथाय । समिति । अनमत् । अश्वेभ्यः । समिति । अनमत् । यथा । रथः । अश्वैः । प्रजापंतय इति प्रजा–पतये । समिति । अनमत् ।

---

नाय सन्नतिं उपकारमकरोत् एवं अनेन प्रकारेण मह्यं मदर्थं भद्राः सन्नतयः कल्याणा उपकाराः देवकृताः संनमन्तु प्राप्नुवन्तु । एवमुत्तरेष्वपि मन्त्रेषु योजनीयम् । 'समनमदेवं मह्यं' इत्यादिकं

भ्यस्समंनमद्यथा प्रजापतिर्भूतैस्स-
मनंमदेवं मह्यं भद्रास्संनंतयस्सं नं-
मन्तु ॥ ५१ ॥
ये ते पन्थांनस्सवितः पूर्व्यासोऽरेण-
वो विततां अन्तरिक्षे । तेभिर्नो अ-

भूतेभ्यः । समिति । अनमत् । यथा । प्रजापतिरिति प्रजा–पतिः । भूतैः । समनंमदिति सं–अनंमत् । एवम् । मह्यम् । भद्राः । संनंतय इति सं–नतयः । समिति । नमन्तु ॥ ५१ ॥

अद्भ्यस्समंनमद्यथा मह्यं चत्वारि च ॥ २३

[1]ये । ते । पन्थांनः । सवितः । पूर्व्यासः । अरेणवः । वितंता इति वि–तताः । अन्तरिक्षे ।

सर्वत्रानुषज्यते । तदर्थमेवान्ते पुनः पाठः । एतैर्दशभिर्मन्त्रैः अन्नहोमेषु सन्नतिहोमाः कर्तव्याः ॥

इति माधवीये सप्तमे पञ्चमे त्रयोविंशोनुवाकः.

[1]ये इत्यादि ॥ हे सवितर्देव ते तव सम्बान्धिनः पूर्व्यासः पूर्वसिद्धाः अन्तरिक्षे विततोः विस्तृताः अरेणवः धूलिरहिताः ये मार्गाः सन्ति सुगेभिः सुष्ठु गन्तुं शक्यैः तेभिः तैर्मार्गैरागत्य अद्य

द्य पथिभिस्सुगेभी रक्षा च नो अ-
धि च देव ब्रूहि । नमोऽग्नये पृथि-
विक्षिते लोकस्पृते लोकमस्मै यज-
मानाय देहि नमो वायवेऽन्तरिक्ष-
क्षिते लोकस्पृते लोकमस्मै यजमा-
नाय देहि नमस्सूर्याय दिविक्षिते
लोकस्पृते लोकमस्मै यजमानाय
देहि ॥ ५२ ॥

तेभिः । नः । अद्य । पथिभिरिति पथि-भिः । सु-गेभिरिति सु-गेभिः । रक्ष । च । नः । अधीति । च । देव । ब्रूहि । नमः । अग्नये । पृथिविक्षित इति पृथिवि-क्षिते । लोकस्पृत इति लोक-स्पृते । लोकम् । अस्मै । यजमानाय । देहि । नमः । वायवे । अन्तरिक्षक्षित इत्यन्तरिक्ष-क्षिते । लोकस्पृत इति लोक-स्पृते । लोकम् । अस्मै । यजमानाय । देहि । नमः । सूर्याय । दिविक्षित इति

अस्मिन्कर्मणि नः अस्मान् रक्ष। तथा नः अस्मान् अधिब्रूहि च अधिकोऽयं यजमान इति देवानामग्रे कथय च ॥

²नम इति ॥ पृथिविक्षिते भूनिवासिने लोकस्पृते लोकस्य प्रीण-

यो वा अश्वस्य मेध्यस्य शिरो
वेद शीर्‌षण्वान्मेध्यो भवत्युषा वा
अश्वस्य मेध्यस्य शिरस्सूर्यश्चक्षु-

दिवि–क्षिते । लोकस्पृत इति लोक–स्पृते । लोकम् । अस्मै । यजमानाय । देहि ॥ ५२ ॥

ये ते चतुश्चत्वारिꣳशत् ॥ २४ ॥

यः । वै । अश्वस्य । मेध्यस्य । शिरः । वेद । शीर्‌षण्वानिति शीर्‌षण्–वान् । मेध्यः । भवति । उषाः । वै । अश्वस्य । मेध्यस्य । शिरः । सूर्यः । चक्षुः । वातः । प्राण इति प्र–अनः । चन्द्रमाः ।

---

यित्रे अग्नये नमः अस्तु । अस्मै यजमानाय लोकं उत्तमस्थानं देहि । एवमुत्तरयोरपि योज्यम् ॥

इति माधवीये सप्तमे पञ्चमे चतुर्विंशोनुवाकः.

---

[1]अथान्तिमे अनुवाके सर्वजगदात्मकत्वेनाश्वः स्तूयते । अथवा विराड्रूपेण अश्वोपासनप्रतिपादकोऽयमनुवाकः । प्रकरणादुत्कृष्योपनिषदादौ आमनन्ति । य इति ॥ यः पुमान् मेध्यस्य यागयोग्यस्य अश्वस्य शिरो वेद शिरःप्रभृतीनवयवान् विराडवयवभूतोषःकालादिरूपेणोपास्ते सोऽयं शीर्षण्वान् उषःकालादिरूपैः शिरःप्रभृतिभिः विराडवयवैर्युक्तो मेध्यः यागफलयोग्यो भवति । क्रत्व-

वातः प्राणश्चन्द्रमाश्श्रोत्रं दिशः पादा अवान्तरदिशाः पर्शवोऽहोरात्रे निमेषोऽर्धमासाः पर्वाणि मासास्संधानान्यृतवोऽङ्गानि संवथ्सर

श्रोत्रम् । दिशः । पादाः । अवान्तरदिशा इत्यवान्तर-दिशाः । पर्शवः । अहोरात्रे इत्यहः-रात्रे । निमेष इति नि-मेषः । अर्धमासा इत्यर्ध-मासाः । पर्वाणि । मासाः । सन्धानानीति सं-धानानि । ऋतवः । अङ्गानि । संवत्सर इति सं-वत्सरः । आत्मा । रश्मयः । केशाः । नक्षत्राणि । रूपम् ।

नुष्ठानस्य चोपासनस्य च समानं फलम् । तथा च पञ्चमकाण्डे समाम्नातं 'सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उचैनमेवं वेद'* इति। तत्र कस्मिन्नश्वावयवे को विराडवयवो ध्यातव्य इति तत्सर्वमुच्यते । मेध्यस्याश्वस्य यच्छिरः तत् उषाः उषःकालरूपम् । यदश्वस्य चक्षुः तत्सूर्यः । यः तदीयः प्राणः सोऽयं बाह्यो वायुः । यत्तदीयं श्रोत्रं सोयं चन्द्रमाः । ये तदीयाः पादाः ताः प्राच्यादिदिशः । ये पर्शवः पार्श्वास्थिविशेषाः ता इमा आग्नेय्याद्यवान्तरदिशाः । यस्तदीयो निमेष उन्मेषसाहितः ते उभे अहोरात्रे । यानि तदीयहस्तपादगतपर्वाणि ते शुक्लकृष्णपक्षरूपा अर्धमासाः । यानि च पर्वणां सन्धानानि ते चै-

*सं. ५-३-१२.

आत्मा रश्मयः केशा नक्षत्राणि
रूपं तारका अस्थानि नभो माꣳ-
सान्योषधयो लोमानि वनस्पतयो
वाला अग्निर्मुखं वैश्वानरो व्यात्तम्॥
५३ ॥ समुद्र उदरमन्तरिक्षं पायु-
र्द्यावापृथिवी आण्डौ ग्रावा शेपस्सो-

तारकाः । अस्थानि । नभः । माꣳसानि । ओषधयः । लोमानि । वनस्पतयः । वालाः । अग्निः । मुखम् । वैश्वानरः । व्यात्तमिति वि—आत्तम् ॥ ॥५३॥ समुद्रः । उदरम् । अन्तरिक्षम् । पायुः । द्यावापृथिवी इति द्यावा—पृथिवी । आण्डौ । ग्रावा । शेपः । सोमः । रेतः । यत् । जञ्जभ्यते । तत् । वीति । द्योतते । यत् । विधूनुत इति वि—धूनुते ।

---

त्राद्या मासाः । यानि चानुक्तविशेषाणि खुराद्यङ्गानि ते वसन्ताद्यृतवः । यः आत्मा मध्यदेहः स संवत्सरकालः । ये तदीयाः केशाः ते सूर्यरश्मयः । यदश्वस्य भास्वरं रूपं तानि कृत्तिकादिनक्षत्राणि । यान्युक्तान्यस्थीनि तानि बृहस्पतिशुक्रध्रुवाद्याः प्रौढतारकाः । यानि तत्रतत्र स्थितानि मांसखण्डानि तदेतन्नभः । यानि क्षुद्रलोमानि ता ओषधयः । ये वालाः पुच्छगता दीर्घकेशाः ते वनस्पतयः । यदेतन्मुखं सम्पद्यते अयं लोकप्रसिद्धोऽग्निः ।

मो रेतो यज्जंञ्जभ्यते तद्वि द्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वागहर्वा अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते रात्रिरेनं महिमा पश्चादनु जायत एतौ वै महिमानावश्वमभितस्सं बभूवतुर् हयो देवानवहद-

तत् । स्तनयति । यत् । मेहति । तत् । वर्षति । वाक् । एव । अस्य । वाक् । अहः । वै । अश्वस्य । जायमानस्य । महिमा । पुरस्तात् । जायते । रात्रिः । एनम् । महिमा । पश्चात् । अन्विति । जायते । एतौ । वै । महिमानौ । अश्वम् ।

---

यत् व्यात्तं मुखविदारणं सोयं वैश्वानरनामको देवताविशेषः । यदुदरं सोयं समुद्रः । यः पायुः तदन्तरिक्षम् । यावाण्डौ ते द्यावापृथिव्यौ । यत् शेपः सोयमभिषवार्थो ग्रावा । यद्रेतः स सोमरसः। यत् जञ्जभ्यते गात्राणि विनामयति सेयं विद्युत् । यत् विधूनुते सशब्दं शरीरं कम्पयति तदेतद्गर्जनम् । यदेतन्मेहनं सेयं वृष्टिः। अस्य हेषाशब्दरूपा या वाक् सेयं वेदरूपा वागेव । जायमानस्य क्रतौ प्रयुज्यमानस्याश्वस्य यः संज्ञपनात् पुरस्तान्महिमाख्यो राजतग्रहः तदिदमहरेव । एनं पश्चात् एतस्याश्वस्य संज्ञपनादूर्ध्वं यो महि-

र्वाऽसुरान् वाजी गन्धर्वानश्वो म-
नुष्यान्थ्समुद्रो वा अश्वस्य योनि-
स्समुद्रो बन्धुः ॥ ५४ ॥

अभितः । समिति । बभूवतुः । हयः । देवान् । अवहत् । अर्वा । असुरान् । वाजी । गन्धर्वान् । अश्वः । मनुष्यान् । समुद्रः । वै । अश्वस्य । योनिः । समुद्रः । बन्धुः ॥ ५४ ॥

व्यात्तमवहद्द्वादश च ॥ २५ ॥

गावो गावस्सिषासन्तीः प्रथमे मासि संमान्यौ यदि सोमौ षडहैरुत्सृज्यां३ देवानामकर्येण चर्माव पृथिव्यै दत्वते कस्त्वाऽग्नये यो वै यः प्राणतो य आत्मदा आ ब्रह्मन्नाऽक्राञ्जन्ति बीजमाग्नेयोष्टा-

---

माख्यः सौवर्णग्रहः सेयं रात्रिः । एतौ एवोभौ महिमानौ ग्रहौ अश्वमभितः सम्बभूवतुः अश्वस्य संज्ञपनात् पूर्वं पश्चाच्च व्यवस्थितौ । हयार्ववाज्यश्वाः अवान्तरजातिविशेषाः तत्तद्रूपेण देवादीन् वहन्ति । एवंविधस्य विराड्रूपस्याश्वस्य समुद्र एव योनिः कारणम् । स-म्यगुद्रवत्युत्पद्यते जगदस्मादिति समुद्रः परमात्मा; न ह्यन्यस्मादयं विराडुत्पत्तुमर्हति । स एवास्य बन्धुः स्तम्भः स्थितिहेतुरित्यर्थः । एवमुपासिता पापक्षयद्वारा विराड्रूपं प्राप्नोति, ‘तं यथायथोपासते तथैव भवति’ इति श्रुत्यन्तरात् । विराट्प्राप्तिश्च क्रममुक्तिहेतुः

कपालोऽग्नयेऽꣳहोमुचेऽष्टाकपालोऽग्नये समनमद्येते पन्थानो यो वा अश्वस्य मेध्यस्य शिरः पञ्चविꣳशतिः ॥ २५ ॥

गावस्समान्यस्सवनमष्टाभिर्वा एते देवकृतं चाभिजित्या इत्याहुर्वरुणोद्भिस्साम्ने चतुःपञ्चाशत् ॥ ५४ ॥ हरिः ओम् ॥ श्रीकृष्णार्पणमस्तु॥

कृष्णयजुर्वेदे सप्तमकाण्डे पञ्चमः प्रश्नः
काण्डश्च समाप्तः.

समाप्ता चेयं तैत्तिरीयसंहिता.

---

तत्र ज्ञानोत्पत्तौ सत्यां तेन विराजा सह मुच्यमानत्वात् । तथा च स्मृतिः—

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इति । एतच्च भगवान् व्यासः—'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' इत्यस्मिन्नधिकरणे महता प्रबन्धेन प्रतिपादयामास इत्यशेषमतिमङ्गलम् ॥

इति माधवीये सप्तमे पञ्चमे पञ्चविंशोनुवाकः.

समाप्तं च सप्तमं काण्डम्.

# अशुद्धशोधिनी.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १० | ५ | रूपाभ्य | रूपाभ्या |
| १७ | ११ | मान | मानं |
| १८ | १३ | इति | इतिं |
| २३ | ९ | लोकषु | लोकेषुं |
| ३४ | १ | वैं प्र | वैं ते प्र |
| ३५ | २ | त्रीण्या | त्रीण्यां |
| ३७ | १२ | यज | यजं |
| ४६ | ३ | वंज्र | वज्रं |
| ४९ | ५ | प्रेति | प्रेतिं |
| ६४ | ७ | सास | साम |
| ७१ | ९ | इत्यर्घ | इत्यर्घं |
| ११६ | ३ | संवं– | सँव– |
| ११८ | ८ | वान्ति | वाति |
| १३८ | ६ | मध्यान्दिने | मध्यन्दिने |
| ,, | ७ | वषट्कारं | वषट्कार |
| ,, | १२ | मेवै | मवै |
| १४७ | १० | ते । | ते इतिं । |
| १९९ | १५ | अगो | आगो |

——*——

# शुद्धिपत्रिका.

| पुटे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ६ | ४ | संदसं | संसदं |
| ९ | ९ | त्रयस्त्रिंशैरव | त्रयस्त्रिंशैरेव |
| ४४ | २ | व्यङ् | व्यञ् |
| ४५ | १ | आद्गुगा | अद्गुगा |
| ४९ | ७ | चे | च |
| ५० | ३ | प्रजाकारः | प्रजाकार- |
| ७९ | ६ | मनुन्त्वयते | मनुमन्त्वयते |
| ९१ | ,, | स्त्रव्यमि | स्त्रिव्यवि |
| ९८ | १७ | छन्दस्यपु | न छन्दस्यपु |
| १०४ | १ | जनयथा | जनयथ |
| १२६ | ७ | छन्दति | छन्दांसि |
| १४४ | ३ | हिल्प्रत्ययः | हिंल्प्रत्ययः |
| १६८ | ६ | दुर्भूतमक्रन्न् | तै. ब्रा. १-२-६. |
| ,, | ७ | सुभूतमक्रन्न् | ,, |
| १९२ | ६ | जायतम् । | जायताम् । |

